॥ श्रीः ॥

बुधवरश्रीमदप्पय्यदीक्षितविरचितः

# कुवलयानन्दः।

श्रीमत्कविवरजयदेवविरचितस्वमूल-

## चन्द्रालोकसहितः।

श्रीमत्तत्सदुपाख्यवैद्यनाथसूरिविरचितया

## अलङ्कारचन्द्रिकाव्याख्यया

च विभूषितः।

स च

रावेरग्रामनिवासिगोविन्दशास्त्रिणा संशोधितः,

क्षेमराज-श्रीकृष्णदासश्रेष्ठिना

मुम्बय्यां

( खेतवाडी ७ वीं गली खम्बाटा लैन )

स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितः।

संवत् १९६८, शके १८३३.

# प्रस्तावना.

अयं कुवलयानन्दग्रन्थः श्रीमदद्वैतविद्याचार्यश्रीमद्विजकुलजलधिकौस्तुभश्रीरङ्गराजाध्वरीन्द्रवरदसूनुश्रीमदप्पय्यदीक्षितैर्विरचितः । स च व्रजमण्डलान्तर्गतश्रीवृन्दावनविहारिश्रीराधाकृष्णशृङ्गारलीलावर्णनपरस्य गीतगोविन्दनामकाव्यस्य प्रणेतुः श्रीजयदेवकविवरस्य चन्द्रालोकनामकालङ्कारग्रन्थस्य व्याख्यानरूपोऽस्ति । जयदेवविषये चायमुल्लेखो दृश्यते–

असौ जयदेवनामा कविवरः श्रीभोजदेवतनयः, अस्य माता श्रीराधानाम्न्यासीत् । रामा इत्यपि केचित्तस्या नाम व्याहरन्ति । अयं श्रीजयदेवो वंगदेशीयतिंदुबिल्वग्रामे बभूव । "अयं जयदेवो बोपदेवस्य भ्राताऽऽसीत्" इति कश्चिदनभिज्ञोप्यभिज्ञंमन्यो दयानन्दो नामार्यसमाजोत्पादकः स्वकीये सत्यार्थप्रकाशग्रन्थे ११ समुल्लासे प्रललाप । भिन्नमातापित्रोर्भिन्नदेशप्रसूतयोः कथं नाम भ्रातृत्वं विज्ञातमनेनेति स एव जानातु । प्रायः 'देव' इति पदमस्य तस्य च नामांते दृश्यते । यथा 'बोपदेवः' तथा 'जयदेवः' इति । एवं च 'देव' शब्दसादृश्येनानयोर्भ्रातृत्वं घटयन्देवानांप्रिय एवावभासते । किं दयानंदस्य टोडरानन्दोऽपि कश्चिद्भ्राता न भवेत् ? 'आनन्द' पदस्योभयत्रापि दृश्यमानत्वात् । अनयोर्भिन्नमातापितृत्वं च तद्धस्तलेखादेवावगम्यते । यथा चोक्तं जयदेवकविना गीतगोविन्दसमाप्तौ–

"श्रीभोजदेवप्रभवस्य राधादेवीसुतस्यास्य सदा कवित्वम् ।
पराशरादिप्रियवर्गकण्ठे सुप्रीतपीताम्बरमेतदस्तु ॥" इति ।

बोपदेवकृतकविकल्पद्रुमनामकश्लोकबद्धधातुपाठग्रन्थसमाप्तौ च–

"विद्वद्धनेशशिष्येण भिषक्केशवसूनुना ।
तेने वेदपदस्थेन बोपदेवद्विजेन यः ॥" इति ।

एतच्छ्लोकद्वयार्थविचारणायां सुस्पष्टमेवास्यार्यसमाजप्रतिष्ठापकस्य दयानंदस्य कूपकूर्मायितमुदुम्बरकीटायितं चावगम्यते विविधग्रन्थावमर्शन इति सुनिपुणमवधेयं सुधीभिः । अस्तु किं तया चर्चया । परमेतत्तावत्सिद्धं,–यदयं जयदेवो न बोपदेवभ्रातेति ।

अथास्य समयस्तावद्विमृश्यते । विक्रमार्कसंवत् १२६३ वर्षे कुतुबुद्दीननामैकः स्वतंत्रो दिल्लीपतिरभूत् । यः पूर्वं शहाबुद्दीनगोरीसुलतान इत्येतस्य दासीपुत्र आसीत् । अनेन कुतुबुद्दीनेन कतिपयान्संवत्सरान्दिल्लीपतिपादशाहपदं प्रशासितम् । तेन च बखतियारखिलजीसेनापतिप्रभृति–योधानां साहाय्येन वंगदेशराज्यं जितम् । तस्मिन्समये विदिकुलोद्भव उदीश्वरराजान्ववायसंभूतो लक्ष्मणसेननामा राजा नदियाशांतिपुरे राज्यमशासीत् । तस्य राज्यं पूर्वस्यां वंगदेशमभिव्याप्यासमुद्रतीरान्तप्रान्तपर्यंतमशिषत् । तद्देशीयाः सामन्तभूपालास्तदाज्ञां शिरसा पर्यपालयन् । यदा बखतियार-

खिळजीनामा कुतुबुद्दीनस्य सेनापतिर्नदियाशांतिपुरे महान्तमुपद्रवमकरोत्। तदा राजा लक्ष्मणसेनो नदियाशांतिपुरं परित्यज्य जगन्नाथपुरं प्रति जगाम। उडीशाराजाधीनो वंगदेशश्च दिल्लीराज्येन सह समधत्त। अयं वृत्तांतः प्रामाणिकभारतवर्षीयेतिहासग्रंथेषु लिखितोऽस्ति। अयमेव लक्ष्मणसेननृपः स्वयं पंडित आसीत्। अस्य सभां जयदेवोमापतिगोवर्द्धनशरणप्रभृतयः पंडिता अलञ्चक्रुः। अस्यैव लक्ष्मणसेनस्य राज्ञः समये जयदेवकविना गीतगोविन्दं नाम काव्यं प्रणीतमस्ति। गोवर्द्धनाचार्यादिभिरपि बहवो ग्रन्थाः प्रणीताः संति। तत्र गीतगोविन्दस्य प्रथमसर्गेऽयं चतुर्थः श्लोकोऽस्ति–

"वाचः पल्लवयत्युमापतिधरः संदर्भशुद्धिं गिरां
जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुतेः।
शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्द्धन-
स्पर्द्धी कोऽपि न विश्रुतः श्रुतिधरो धोयी कविक्ष्मापतिः॥" इति।

अयं श्लोकश्च लक्ष्मणसेनभूपालेन विरचितः। यतः–"अस्मिन्गीतगोविन्दकाव्ये संगीताष्टपदीगीतग्रन्थो जयदेवकविना निर्मितः, तत्रैव पद्यमयश्च लक्ष्मणसेनभूपतिना निर्मितः" इत्ययं वृत्तांतो हि मानांकराजकृतगीतगोविन्दमानांकीटीकायां नारायणभट्टयामन्येषु च सत्कथामृतसागराद्यनेकेतिहासग्रंथेषु सुप्रसिद्धम्। एतावता च सिद्धमेतावत्,–यदयं जयदेवकविर्विक्रमार्कसंवद् १२६३ वर्षपूर्वापरसमकालिक आसीदिति।

अनेन जयदेवकविवरेणायं चन्द्रालोकग्रंथो विरचितः। एतं ग्रंथं मूलतया परिकल्प्य कुवलयानन्दग्रन्थनिर्माता द्रविडदेशान्तर्वर्तिकाञ्चीनगरनिवासिश्रीमदद्वैतविद्याचार्यः श्रीमद्द्विजकुलजलधिकौस्तुभश्रीरङ्गराजाध्वरीन्द्रवरदाचार्यसूनुरप्पय्यदीक्षित इति समाप्तिदण्डकादवगम्यते। अयमेवाप्पय्यदीक्षितः कर्णाटराजगुरोस्तातार्यस्य भागिनेय आसीत्। अनेनाद्वैतसिद्धान्त–शिवश्रेष्ठ्यादिविषयेऽनेकान्ग्रन्थान्विरच्य वादविवादान्कृत्वा मातुलस्य तातार्यस्य द्वैतदुराग्रहः खण्डित इति सुप्रसिद्धं सर्वतोमुखम्। तदेतदनयोर्मातुलभागिनेयत्वं सुप्रसिद्धमिति द्योतयन्विश्वगुणादर्शकर्ता वेङ्कटाध्वरी विश्वगुणादर्शचंपूकाव्यस्यारम्भे द्वितीयतृतीयश्लोकयोः स्वनामनिर्देशानुबन्धप्रसङ्गेन निजवंशपुरुषनिर्देशं चकार। तद्यथा–

"काञ्चीमण्डलमण्डनस्य मखिनः कर्णाटभूभृद्गुरो-
स्तातार्यस्य दिगन्तकान्तयशसो यं भागिनेयं विदुः।
अस्तोकाध्वरकर्तुरप्पयगुरोरस्यैष विद्वन्मणेः
पुत्रः श्रीरघुनाथदीक्षितकविः पूर्णो गुणैरेधते॥
तत्सुतस्तर्कवेदान्ततन्त्रव्याकृतिचिन्तकः।
व्यक्तं विश्वगुणादर्शं विधत्ते वेङ्कटाध्वरी॥" इति।

एतस्मात्सिद्धमिदं यदयमप्पय्यदीक्षितः स एवायमिति ॥ परमियमेका शंकोद्भवति । यदयं वेङ्कटाऽध्वरी रामानुजसम्प्रदायान्तर्वर्तिवडहलतैंगिलान्यतरसंप्रदायानुसारी बभूव । तत्कथं घटतेऽत्यन्ताद्वैतसिद्धान्ताभिमानिनोऽप्पय्यदीक्षितस्य संतते रामानुजमतानुगत्वमिति संदिग्धोऽयं विषयश्चिन्त्य एव । परं नूनमनेनाप्पय्यदीक्षितेनैव सर्वथा भवितव्यम् । यतो रघुनाथाचार्याभिधस्यैतत्तनयस्य श्लेषयमकचक्रवर्त्तित्वमालङ्कारिकत्वं च सुप्रसिद्धं साधकम् । यदुक्तं वेङ्कटाध्वरिणा विश्वगुणादर्शचम्पूसमाप्तिदण्डके-"इति श्रीपञ्चमतभञ्जननिबन्धनव्याख्यातृतातयज्ञभागिनेयवाजपेयसार्वप्रष्ठाप्तोर्यामादियज्वात्रेयवंशमौक्तिकीभवदप्पय्याचार्यतनूभवश्लेषयमकचक्रवर्तिरघुनाथाचार्यदीक्षिततनयस्य श्रीमद्वेङ्कटाध्वरिणः कृतौ विश्वगुणादर्शः समाप्तः" इति । अतः स एवायमप्पय्यदीक्षित इति सुनिपुणमवधीयते । अस्तु । यद्ययमेवाप्पय्यदीक्षितो वेङ्कटाध्वरिपितामहः स्यात्तर्हि तदीयकालश्च शालिवाहनसंवत्सरीय १७०० शतक आसीदिति सिद्धम् । यतो विश्वगुणादर्शचंपूकाव्यं वेङ्कटाध्वरिणा विरच्य महाराष्ट्रदेशे पुण्यपत्तने 'पेशवे' पदाधिष्ठितानां श्रीबाजीरायाणां सभायामानीतमासीत् । तदीयविश्वगुणादर्शचम्पूकाव्ये महाराष्ट्रस्थब्राह्मणानां म्लेच्छनिर्णाशनैकबद्धकङ्कणानां वैदिकधर्मावनाय समादृतक्षत्रियाचाराणां गुणवर्णनं समाकर्ण्यातिसंतुष्टेभ्यः श्रीबाजीरायेभ्यस्तेन भूरिपारितोषिकधनं लब्धमासीदिति किंवदन्ती तदीयग्रन्थस्थमहाराष्ट्रब्राह्मणवृत्तान्तवर्णनादवितथैवेति । तस्यायं पितामहोऽप्पय्यदीक्षितस्तस्मात्किंचित्प्रागासीदित्यनवद्यम् । अप्पय्यदीक्षितेन बहवोऽद्वैतसिद्धान्तग्रन्थाः कृताः संति । अस्याप्पय्यदीक्षितस्य पूर्वजन्मनि या पत्नी सा तस्मिञ्जन्मनि शूद्रा भूत्वा शंभुनिदेशात्तं सिषेवे । सोऽपि तां, विना संगमं गृहे पालयांबभूव । अंतकाले च ब्राह्मणीं पत्नीं विहाय तया शूद्रपत्न्या सह शिवालयं गत्वा तत्र प्रस्फुटिते शिवलिंगे तया सह निलीनोऽभूदिति काचिद्दन्तकथा सर्वतोऽपि प्रसिद्धेति । अनेनाप्पय्यदीक्षितेनायं कुवलयानन्दो विरचितः । न चैतेनायं कुवलयानन्दग्रन्थश्चंद्रालोकग्रंथमपलप्य स एव स्वरूपनामान्तरेण निर्मित इति राभस्यमदसीयमिति शंक्यम् । तेन न चन्द्रालोकापलापः कृतः प्रत्युत सकलजगदाह्लादनाय सर्वेभ्यः स प्रदर्शितः । तेन च ग्रन्थादौ चतुर्थश्लोके-

"अलंकारेषु बालानामवगाहनसिद्धये ।
ललितः क्रियते तेषां लक्ष्यलक्षणसंग्रहः ॥"

इति लिखितं, तेन नवीन एवायं ग्रंथः क्रियत इति प्रतिज्ञाय परग्रन्थापलापनं कृतमिति कश्चित्कुत्सितो जानातु नाम । परं नायमुपरितनः श्लोकोऽप्पय्यदीक्षितविनिर्मितः, किंतु चन्द्रालोकस्थ एव सः । मूलभूते केव-

लचन्द्रालोकग्रन्थे स यथानुपूर्वीको दृश्यत एवेति । तेन चाग्रिमश्लोके सुस्पष्टमेवोदितम् । यथा-

"येषां चन्द्रालोके दृश्यन्ते लक्ष्यलक्षणश्लोकाः ।
प्रायस्त एव तेषामितरेषां त्वभिनवा विरच्यन्ते ॥" इति ।

तथा च नात्र परग्रन्थापहारशंकावकाशः । अत एवोक्तं समाप्तिपद्यद्वये-

"अमुं कुवलयानन्दमकरोदप्पदीक्षितः ।
नियोगाद्वेङ्कटपतेर्निरुपाधिकृपानिधेः ॥
चन्द्रालोको विजयतां शरदागमसंभवः ।
हृद्यः कुवलयानन्दो यत्प्रसादादभूदयम् ॥" इति ।

तस्मादिदमवधेयं सुधीभिः-अयं कुवलयानन्दः श्रीमद्वेङ्कटराजनियोगेन श्रीमदप्पय्यदीक्षितविरचितश्चन्द्रालोकनामकग्रन्थसविस्तरयोजनाविष्करणेऽप्रतिमसाहाय्यभूत इति ।

अस्यापि कुवलयानन्दस्य सुबोधहेतवे श्रीमत्पदवाक्यप्रमाणाभिज्ञतत्सदुपाख्यभट्टविठ्ठलसूरिवरात्मजश्रीरामचन्द्रसूरिसूनुश्रीवैद्यनाथविद्वद्वरैरलंकारचन्द्रिकाख्या व्याख्या विनिर्मिता । अयं च वैद्यनाथो वैजनाथापरनामधेयो महाराष्ट्रदेशोद्भवो देशस्थब्राह्मणो वेरूळग्रामसमीपस्थ इति वृद्धाः संगिरन्ते । प्रायोऽनेन शालिवाहनसंवत्सरीय १७०० सप्तदशशतके भवितव्यम् । यतस्तत्पौत्रेण सहाध्येतारः केचिच्छास्त्रिणोऽस्माभिः श्रुताः । संप्रति ते न संति । भवेदिदं भवतु । प्रकृतं तावद्विचारयामः-

इदं पुस्तकं संशोध्य मुद्रयितुमिच्छद्भिरस्माभिः खानदेशीयरावेरग्रामनिवासिपरशुरामभट्टतनयगोविन्दशास्त्रिषु सूचना कृता । ततस्तैर्गोविन्दशास्त्रिभिर्महता प्रयासेन संचितात्प्राचीनपुस्तकसंग्रहात्समानीतैस्त्रिभिर्हस्तलिखितपुस्तकैरेकवाक्यतां कृत्वा पाठभेदान्निवेश्य स्वपितृपितृव्यपौत्राणां रामचन्द्रभट्टतनयानां बालशास्त्रिणां च साहाय्येन संशोध्य परिष्कृत्य चास्माकं सविधे दत्तम् । तदेतदस्माभिः स्वकीये " श्रीवेङ्कटेश्वर " ( स्टीम् ) मुद्रणालये मुद्रयित्वा प्रकाशितम् ।

विज्ञापयामश्च सर्वान्विद्वज्जनान् । यदस्मिन्नैसर्गिकचित्तविभ्रमदृष्टिदोषाभ्यामशुद्धं भवेत्तत्क्षमध्वमिति शम् ।

विद्वज्जनकृपाभिलाषी-

**क्षेमराज-श्रीकृष्णदास,**

"श्रीवेङ्कटेश्वर" यन्त्रालयाध्यक्षो मुंबई-स्थः.

॥ श्रीः ॥

# अथ सचन्द्रालोककुवलयानन्दविषयानुक्रमणिका ।



॥ श्रीः ॥

# अथ चन्द्रालोकः ।

## प्रथमो मयूखः १.

उच्चैरस्यति मन्दतामरसतां जाग्रत्कलङ्कैरव-
ध्वंसं हस्तयते च या सुमनसामुल्लासिनी मानसे ।
धृष्टोद्यन्मदनाशनार्च्चिरमला लोकत्रयीदर्शिका
सा नेत्रत्रितयीव खण्डपरशोर्वाग्देवता दीव्यतु ॥ १ ॥
हंहो चिन्मयचित्तचन्द्रमणयः संवर्द्धयध्वं रसा-
न्रेरे स्वैरिणि निर्विचारकविते मास्मात्प्रकाशीभव ।
उल्लासाय विचारवीचिनिचयालंकारवारांनिधे-
श्चन्द्रालोकममुं स्वयं वितनुते पीयूषवर्षः कृती ॥ २ ॥
युक्त्यास्वाद्यलसद्रसैकवसतिः साहित्यसारस्वत-
क्षीराम्भोधिरगाधतामुपदधत्सेव्यः समाश्रीयताम् ।
श्रीरस्मादुपदेशकौशलमयं पीयूषमस्माज्जग-
ज्जाग्रद्भास्वरपद्मकेशरशयः शीतांशुरस्माद्बुधाः ॥ ३ ॥
तं पूर्वाचार्यसूर्य्योक्तिज्योतिःस्तोमोद्गतं स्तुमः ।
यं निपत्य प्रकाशन्ते मद्गुणत्रसरेणवः ॥ ४ ॥
नाशंकनीयं पूर्वेषां मतमेतेन दूष्यते ।
किन्तु चक्षुर्मृगाक्षीणां कज्जलेनैव भूष्यते ॥ ५ ॥

### काव्यहेतुमाह—

प्रतिभैव श्रुताभ्याससहिता कवितां प्रति ।
हेतुर्मृदम्बुसम्बद्धबीजव्यक्तिर्लतामिव ॥ ६ ॥

## काव्यलक्षणमाह—

निर्दोषा लक्षणवती सरीतिर्गुणभूषिता ।
सालंकाररसाऽनेकवृत्तिर्वाक्काव्यनामभाक् ॥ ७ ॥
अङ्गीकरोति यः काव्यं शब्दार्थावनलंकृती ।
असौ न मन्यते कस्मादनुष्णमनलं कृती ॥ ८ ॥
विभक्त्युत्पत्तये योग्यः शास्त्रीयः शब्द उच्यते ।
रूढयौगिकतन्मिश्रैः प्रभेदैः स पुनस्त्रिधा[1] ॥ ९ ॥
अव्यक्तयोगनिर्योगयोगाभासैस्त्रिधाऽग्रिमः ।
ते च वृक्षादिभूवादिमण्डपाद्या यथाक्रमम् ॥१०॥
शुद्धतन्मूलसंभिन्नप्रभेदैर्यौगिकस्त्रिधा ।
ते च भ्रांतिस्फुरत्कांतिकौन्तेयादिस्वरूपिणः ॥११॥

## रूढियौगिकमाह—

तन्मिश्रोऽन्योन्यसामान्यविशेषपरिवर्तनात् ।
नीरधिः पंकजं सौधं सागरो भूरुहः शशी ॥ १२ ॥

## सामान्यपरिवृत्त्या यत्सिद्ध्यति तदाह—

क्षीरनीरधिराकाशपंकजं तेन सिध्यति ।
विभक्त्यन्तं पदं वाक्यं तद्व्यूहोऽर्थसमाप्तितः ॥१३॥
युक्तार्थता ताञ्च विना खण्डकाव्यं स इष्यते ॥
वाक्यञ्च खण्डवाक्यञ्च पदमेकमपि क्वचित् ॥१४॥

## क्रमादुदाहरति—

धूमवत्त्वादिति यथा देवेत्यामन्त्रणं यथा ।
वाक्यान्येकार्थविश्रान्तान्याहुर्वाक्यकदम्बकम् ॥१५॥

---

१ रूढः ।

महादेवः सत्रप्रमुखमखविघ्नैकचतुरः
सुमित्रातद्भक्तिप्रणिहितमतिर्यस्य पितरौ ।
अनेनासावाद्यः सुकविजयदेवेन रचिते
चिरं चन्द्रालोके सुखयतु मयूखः सुमनसः ॥ १६ ॥

इति श्रीजयदेवकविवरविरचिते चन्द्रालोकालङ्कारे
वाग्विचारो नाम प्रथमो मयूखः ॥ १ ॥

---

द्वितीयो मयूखः २.

स्याच्चेतोविशता येन सक्षता रमणीयता ।
शब्देऽर्थे च कृतोन्मेषं दोषमुद्घोषयन्ति तम् ॥ १ ॥
भवेच्छ्रुतिकटुर्वर्णः श्रवणोद्वेजने पटुः ।
विदुष्यते व्याकरणविरुद्धच्युतसंस्कृतिः ॥ २ ॥
अप्रयुक्तं दैवतादौ शब्दे पुँल्लिङ्गतादिकम् ।
असमर्थन्तु हन्त्यादेः प्रयोगो गमनादिषु ॥ ३ ॥
स हन्ति हन्त कान्तारे कान्तः कुटिलकुन्तलः ।
निहतार्थं लोहितादौ शोणितादिप्रयोगतः ॥ ४ ॥
एकाक्षरं विना भूभ्रूक्ष्मादिकं खतलादिवत् ।
व्यनक्त्यनुचितार्थं यत्पदमाहुस्तदेव तत् ॥ ५ ॥
इयमुद्धतशाखाग्रकेलिकौतुकवानरी ।
निरर्थकं तुहीत्यादि पूरणैकप्रयोजनम् ॥ ६ ॥
अर्थे विदधदित्यादौ दधदाद्यमवाचकम् ।
धत्ते नभस्तलं भास्वानरुणं तरुणैः करैः ॥ ७ ॥
अश्लीलं त्रिविधं व्रीडाजुगुप्साऽमङ्गलात्मना ।
आह्लादसाधनं वायुः कान्तानाशे भवेत्कथम् ॥ ८ ॥

स्याद्व्यर्थमिह सन्दिग्धं नद्यां यान्ति पतत्रिणः ।
स्यादप्रतीतं शास्त्रैकगम्यं वीताऽनुमादिवत् ॥ ९ ॥
शिथिलं शयने लिल्ये मच्चित्तं ते शशिश्रियि ।
मस्तपृष्ठकटीलोष्टगल्लादि ग्राम्यमुच्यते ॥ १० ॥
नेयार्थं लक्षणात्यन्तप्रसरादमनोहरम् ।
हिमांशोर्हारधिक्कारजागरे यामिकाः कराः ॥ ११ ॥
क्लिष्टमर्थो यदीयोर्थश्रेणितः श्रेणिमृच्छति ।
हरिप्रियापितृवारप्रवाहप्रतिमं वचः ॥ १२ ॥
अविमृष्टविधेयांशः समासपिहिते विधौ ।
विशन्ति विशिखप्रायाः कटाक्षाः कामिनां हृदि ॥ १३ ॥
अपराधीन इत्यादि विरुद्धमतिकृन्मतम् ।
अन्यसङ्गतमुत्तुङ्गहारशोभिपयोधरा ॥ १४ ॥
रसाद्यनुचिते वर्णे प्रतिकूलाक्षरं विदुः ।
न मामङ्गद जानासि रावणं रणदारुणम् ॥ १५ ॥
यस्मिन्नुपहतो लुप्तो विसर्ग इह तत्तथा ।
कुसन्धिः पटवागच्छ विसन्धिर्नृपती इमौ ॥ १६ ॥
हतवृत्तमनुक्तोऽपिच्छन्दोदोषश्चकास्ति चेत् ।
विशाललोचने पश्याऽम्बरं तारातरङ्गितम् ॥ १७ ॥
नूनं त्वत्खड्गसम्भूतं यशःपुष्पं नभस्तलम् ।
अधिकं भवतः शत्रून्दशत्यसिलताफणी ॥ १८ ॥
कथितं पुनरुक्ता वाक्छायाब्जश्यामलोचना ।
विकृतं दूरविकृतैरैयरुः कुञ्जराः पुरम् ॥ १९ ॥

पतत्प्रकर्षहीनानुप्रासादित्वे यथोत्तरम्।
गम्भीरारम्भदम्भोलिपाणिरेष समागतः॥ २० ॥
समाप्तपुनरात्तं स्यादेष पीयूषभाजनम्।
नेत्रानन्दी तुषारांशुरेत्यम्बुनिधिबान्धवः॥ २१॥
अर्द्धान्तरपदापेक्षि क्रीडानृत्येषु सस्मितम्।
मेघारम्भं स्तुमः शंभुमर्द्धरम्भोरुविग्रहम्॥ २२ ॥
अभवन्मतयोगः स्यान्न चेदमभितोन्वयः।
येन बद्धोऽम्बुधिर्य्यस्य रामस्यानुचरा वयम्॥ २३ ॥
स एष लंकालंकारं रावणं हन्तुमुद्यतः।
द्विषां सम्पदमाच्छिद्य यः शत्रून्समपूरयत्॥ २४ ॥
अस्थानस्थसमासन्नविद्वज्जनमनोरमम्।
मिथः पृथग्वाक्यपदैः संकीर्णं यत्तदेव तत्॥ २५॥
वक्त्रेण भ्राजते रात्रिः कान्ता चन्द्रेण राजते।
ब्रह्माण्डं त्वद्यशःपूरगर्भितं भूरिभूषणम्॥ २६ ॥
आकर्णय पयःपूर्णसुवर्णकलशायते।
भग्नप्रक्रममारब्धशब्दनिर्वाहहीनता॥ २७ ॥
अक्रमः कृष्ण पूज्यन्ते त्वामनाराध्य देवताः।
अमत्तार्थान्तरं मुख्येऽमुख्ये वार्थे विरोधकृत्॥ २८ ॥
त्यक्तहारमुरः कृत्वा शोकेनालिङ्गिताङ्गना।
अपुष्टार्थो विशेष्ये चेन्न विशेषो विशेषणात्॥२९॥
विशन्ति हृदयं कान्ताकटाक्षाः खञ्जनत्विषः।
कष्टः स्पष्टावबोधार्थमक्षमो वाच्यसन्निभः॥ ३० ॥

व्याहतश्चेद्विरोधः स्यान्मिथः पूर्व्वापरार्थयोः ।
सहस्रपत्रमित्रं ते वक्रं केनोपमीयते ॥ ३१ ॥
कुतस्तत्रोपमा यत्र पुनरुक्तः सुधाकरः ।
दुष्क्रमग्राम्यसन्दिग्धास्त्रयो दोषाः क्रमादमी ॥ ३२ ॥
त्वद्भक्तः कृष्ण गच्छेयं नरकं स्वर्गमेव वा ।
एकं मे चुम्बनं देहि तव दास्यामि कञ्चुकम् ॥ ३३ ॥
ब्रूत किं सेव्यतां चन्द्रमुखी चन्द्रकिरीटयोः ।
अनौचित्यं कीर्तिलतां तरङ्गयति यः सदा ॥ ३४ ॥
प्रसिद्ध्या विद्यया वापि विरुद्धं द्विविधं मतम् ।
न्यस्तेयं पश्य कन्दर्पप्रतापधवलद्युतिः ॥ ३५ ॥
केतकी शेखरे शम्भोर्धत्ते चन्द्रकलातुलाम् ।
सामान्यपरिवृत्तिः स्यात्कुण्डलच्छविविग्रहा ॥ ३६ ॥
विशेषपरिवृत्तिः स्याद्दयिता मम चेतसि ।
द्वे स्तः सहचराऽचारुविरुद्धान्योन्यसंगती ॥ ३७ ॥
ध्वाङ्क्षाः सन्तश्च तनयं स्वं परञ्च न जानते ।
सरोजनेत्रपुत्रस्य मुखेन्दुमवलोकय ॥ ३८ ॥
पालयिष्यति ते गोत्रमसौ नरपुरन्दरः ।
पदे तदंशे वाक्यांशे वाक्ये वाक्यकदम्बके ॥ ३९ ॥
यथानुसारमभ्यूहेद्दोषाञ्छब्दार्थसंभवान् ।
दोषमापतितं स्वान्ते प्रसरन्तं विशृंखलम् ॥ ४० ॥
निवारयति यस्त्रेधा दोषांकुशमुशन्ति तम् ।
दोषो गुणत्वं तनुते दोषत्वं वा निरस्यति ॥ ४१ ॥

भवन्तमथवा दोषं नयत्यत्याज्यतामसौ ।
मुखं चन्द्रश्रियं धत्ते श्वेतश्मश्रुकराङ्कुरैः ॥ ४२ ॥
अत्र हास्यरसोद्देशे ग्राम्यत्वं गुणतां गतम् ।
तव दुग्धाब्धिसम्भूतेः कथं जाता कलङ्किता ॥ ४३ ॥
कवीनां समयाद्विद्याविरुद्धो दोषतां गतः ।
दधार गौरी हृदये देवं हि-मकराङ्कितम् ॥ ४४ ॥
अत्र श्लेषोदयान्नैव त्याज्यं हीति निरर्थकम् ।

इति श्रीजयदेवकविवरविरचिते चन्द्रालोके दोषनिरूपणो नाम द्वितीयो मयूखः ॥ २ ॥

---

तृतीयो मयूखः ३.

## अथ लक्षणानि ।

अंत्याक्षरा विचित्रार्थख्यातिरक्षरसंहतिः ।
उषाकान्तेनानुगतः शूरः शौरिरयं पुनः ॥ १ ॥
शोभाख्यातोऽपि यद्दोषो गुणकीर्त्या निषिध्यते ।
मुधा निन्दति संसारं कंसारिर्यत्र पूज्यते ॥ २ ॥
अभिमानो विचारश्चेद्दूहितार्थनिषेधकृत् ।
इन्दुर्यदि कथं तीव्रः सूर्यो यदि कथं निशि ॥ ३ ॥
हंतुस्त्यक्त्वा बहून्पक्षान्युक्त्यैकस्यावधारणम् ।
नेन्दुर्नार्कोयमौर्वाग्निः सागरादुत्थितो दहन् ॥ ४ ॥
प्रतिषेधः प्रसिद्धानां कारणानामनादरः ।
न युद्धे न भ्रुवोः स्पन्दे नैव धीरा निवारिता ॥ ५ ॥
निरुक्तं स्यान्निर्वचनं नाम्नः सत्यं तथानृतम् ।

ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवान् ॥ ६ ॥
स्यान्मिथ्याध्यवसायश्चेदसती साध्यसाधने ।
चन्द्रांशुसूत्रग्रथितां नभःपुष्पस्रजं वह ॥ ७ ॥
सिद्धिः ख्यातेषु चेन्नाम कीर्त्यते तुल्यतोक्तये ।
युवामेवेह विख्यातौ त्वं बलैर्जलधिर्जलैः ॥ ८ ॥
युक्तिर्विशेषसिद्धिश्चेद्विचित्रार्थान्तरान्वयात् ।
नवस्त्वं नीरदः कोपि स्वर्णं[1] वर्षसि यन्मुहुः ॥ ९ ॥
कार्य्यं फलोपलम्भश्चेद्व्यापाराद्वस्तुतोऽथवा ।
असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवाम् ॥ १० ॥
इत्यादि लक्षणं भूरि काव्यस्याहुर्महर्षयः ।
स्वर्णभ्राजिष्णुभानुत्वप्रभृतीव महीभुजः ॥ ११ ॥

इति श्रीजयदेवकविवरविरचिते चन्द्रालोकालङ्कारे लक्षणनिरूपणो नाम तृतीयो मयूखः ॥ ३ ॥

---

चतुर्थो मयूखः ४.

## अथ गुणः ।

श्लेषो विघटमानार्थघटमानत्ववर्णनम् ।
स तु शब्दैः सजातीयैः शब्दैर्बन्धः सुखावहः ॥ १ ॥
उल्लसत्तनुतां नीतेऽनन्ते पुलककण्टकैः ।
भीतया मानवत्येव श्रियाऽऽश्लिष्टं हरिं स्तुमः ॥ २ ॥
यस्मादन्तःस्थितः सर्व्वः स्वयमर्थोऽवभासते ।
सलिलस्येव सूक्तस्य स प्रसाद इति स्मृतः ॥ ३ ॥

---

१ स्वर्णं सुष्ठु अर्णः जलं—स्वर्णं कनकं च ।

समतालपसमासत्वं वर्णाद्यैस्तुल्यताऽथ वा ।
श्यामला कोमला बाला मरणं शरणं गता ॥ ४ ॥
समाधिरर्थमहिमा लसद्घनरसात्मना ।
स्यादन्तर्विशता येन गात्रमंकुरितं सताम् ॥ ५ ॥
माधुर्यं पुनरुक्तस्य वैचित्र्यचारुतावहम् ।
वयस्य पश्य पश्यास्य चञ्चलं लोचनाञ्चलम् ॥ ६ ॥
ओजः स्यात्प्रौढिरर्थस्य सङ्क्षेपो वाऽतिभूयसः ।
रिपुं हत्वा यशः कृत्वा त्वदसिः कोशमाविशत् ॥७॥
सौकुमार्यमपारुष्यं पर्यायपरिवर्तनात् ।
स कथाशेषतां यातः समालिङ्ग्य मरुत्सखम् ॥ ८ ॥
उदारता तु वैदग्धमग्राम्यत्वात्पृथङ्मता ।
मानं मुञ्च प्रिये किञ्चिल्लोचनं समुदञ्चय ॥ ९ ॥
शृङ्गारे च प्रसादे च कान्त्यर्थं व्यक्तिसंग्रहः ।
अमी दश गुणाः काव्ये पुंसि शौर्यादयो यथा ॥१०॥
तिलकाद्यमिव स्त्रीणां विदग्धहृदयङ्गमम् ।
व्यतिरिक्तमलङ्कारप्रकृतेर्भूषणं गिराम् ॥ ११ ॥
विचित्रलक्षणन्यासो निर्वाहः प्रौढिरौचिती ।
शास्त्रान्तररहस्योक्तिः सङ्ग्रहो दिक्प्रदर्शिता ॥ १२॥

इति श्रीजयदेवकविवरविरचिते चन्द्रालोकालङ्कारे
गुणनिरूपणो नाम चतुर्थो मयूखः ॥ ४ ॥

पञ्चमो मयूखः ५.

## शब्दालंकारपरिसंख्यानम् ।

शब्दार्थयोः प्रसिद्धया वा कवेः प्रौढिवशेन वा ।
हारादिवदलंकारसन्निवेशो मनोहरः ॥ १ ॥
स्वरव्यञ्जनसन्दोहव्यूहाः सन्दोहदोहदाः ।
गौर्जगज्जाग्रदुत्सेकाच्छेकानुप्रासभासुरा ॥ २ ॥
आवृत्तवर्णसंपूर्णं वृत्त्यनुप्रासवद्वचः ।
अमन्दानन्दसन्दोहस्वच्छन्दस्यन्दमन्दिरम् ॥ ३ ॥
लाटानुप्रासभूर्भिन्नाभिप्राया पुनरुक्तता ।
यत्र स्यान्न पुनः शत्रोर्गर्जितं तर्ज्जितं जितम् ॥४ ॥
श्लोकस्याद्धें तदर्द्धे वा वर्णावृत्तिर्यदि ध्रुवा ।
तदा मता मतिमतां स्फुटानुप्रासता सताम् ॥ ५ ॥
उपमेयोपमानादावर्थानुप्रास इष्यते ।
चन्दनं खलु गोविन्दचरणद्वन्द्ववन्दनम् ॥ ६ ॥
पुनरुक्तप्रतीकाशं पुनरुक्तार्थसन्निभम् ।
अंशुकान्तं शशी कुर्वन्नम्बरान्तमुपेत्यसौ ॥ ७ ॥
आवृत्तवर्णस्तबकं स्तवकन्दांकुरं कवेः ।
यमकं प्रथमाधुर्यं माधुर्य्यं वचसो विदुः ॥ ८ ॥
काव्यवित्प्रवरैश्चित्रं खड्गबन्धादि लक्ष्यते ।
तेष्वाद्यमुच्यते श्लोकद्वयी सज्जनरञ्जिता ॥ ९ ॥
कामिनीव भवेत्खड्गलेखा चारुकरालिका ।
काश्मीरसेकरक्तांगी शत्रुकण्ठान्तिकासिका ॥ १० ॥

शब्दालङ्कारान्निरूप्यार्थालङ्कारमाह । तत्रैषामलङ्काराणामनुक्रमणिका लिख्यते—

उपमानन्वयावादावुपमेयोपमानता ।
प्रतीपं रूपकश्चैव परिणामस्ततो मतः ॥ १ ॥
उल्लेखः स्मृतिमद्भ्रान्तिमत्सन्देहा अपह्नुतिः ।
उत्प्रेक्षातिशयोक्ती च ततः स्यात्तुल्ययोगिता ॥ २ ॥
दीपकालङ्कृतिश्चैव तत आवृत्तिदीपकम् ।
प्रतिवस्तूपमा चैव स्याद्दृष्टान्तो निदर्शना ॥ ३ ॥
व्यतिरेकः सहोक्तिश्च विनोक्तिस्तदनन्तरम् ।
समासोक्तिः परिकरस्तथा परिकराङ्कुरः ॥ ४ ॥
श्लेषो ज्ञेयोऽप्रस्तुतप्रशंसा च प्रस्तुताङ्कुरः ।
पर्यायोक्तं ततो व्याजस्तुतिः स्याद्व्याजनिन्दनम् ॥५॥
आक्षेपालङ्कृतिश्चैव विरोधाभास एव च ।
विभावना विशेषोक्तिरसम्भव उदाहृतः ॥ ६ ॥
असङ्गतिश्च विषमं समश्चैव विचित्रकम् ।
अधिकालङ्कृतिश्चाल्पालङ्कृतिस्तदनन्तरम् ॥ ७ ॥
अन्योन्यश्च विशेषश्च व्याघातालङ्कृतिस्ततः ।
हेतुमालैकावली च मालादीपकसाधकौ ॥ ८ ॥
यथासंख्यञ्च पर्यायः परिवृत्तिस्ततो मता ।
परिसंख्यालंकृतिः स्याद्विकल्पस्तदनन्तरम् ॥ ९ ॥
समुच्चयस्ततः प्रोक्तस्ततः कारकदीपकम् ।
समाधिः प्रत्यनीकञ्च काव्यार्थापत्तिरेव च ॥ १० ॥

काव्यलिङ्गं ततश्चार्थान्तरन्यास उदाहृतः ।
विकस्वरः स्यात्प्रौढोक्तिः सम्भावनमतः परम् ॥११॥
मिथ्याध्यवसितिश्चैव ललितं च प्रहर्षणम् ।
ततो विषदनोल्लासाववज्ञालंकृतिस्ततः ॥ १२ ॥
अनुज्ञा लेशमुद्रा च रत्नावल्यपि तद्गुणः ।
स्यात्पूर्वरूपालङ्कारोऽतद्गुणाऽनुगुणावपि ॥ १३ ॥
मिलितश्चैव सामान्यमुन्मीलितनिमीलितौ ।
उत्तरं सूक्ष्मपिहितं व्याजोक्तिस्तदनन्तरम् ॥ १४ ॥
गूढोक्तिर्विवृतोक्तिश्च युक्तिस्तोकोक्तिरेव च ।
छेकोक्तिश्चैव वक्रोक्तिः स्वभावोक्तिश्च भाविकम् ॥१५॥
उदात्तं तत्तदात्युक्तिर्निरुक्तिस्तदनन्तरम् ।
प्रतिषेधो विधिर्हेतुरित्यलंकृतयः शतम् ॥ १६ ॥

॥ इत्यलङ्कारानुक्रमणिका ॥

---

एतदग्रेऽयं चन्द्रालोकग्रन्थः कुवलयानन्दे मिश्रितोऽस्ति । सोऽस्माभिस्तत्रतत्र नाम्ना निर्दिष्ट एवास्तीति ततस्ततोऽवबोद्धव्यः ।

॥ श्रीः ॥

# अथ कुवलयानन्दः ।

## अलङ्कारचन्द्रिकाव्याख्यासमेतः ।

श्रीगणेशाय नमः ।

( कुवलयानन्दः )-अमरीकबरीभारभ्रमरीमुखरीकृतम् ।
दूरीकरोतु दुरितङ्गौरीचरणपङ्कजम् ॥ १ ॥

( अलंकारचन्द्रिका )-अनुचिन्त्य महालक्ष्मीं हरिलोचनचन्द्रिकाम् ।
कुर्वे कुवलयानन्दसदलंकारचन्द्रिकाम् ॥ १ ॥

चिकीर्षिताविघ्नसिद्धय इष्टदेवतां स्तौति–अमरीति ॥ अत्र चरणमेव पंकजमिति मयूरव्यंसकादिसमासाश्रयणात्परिणामालंकारः । चरण आरोप्यमाणस्य पंकजस्यारोपविषयचरणात्मतापरिणतिं विना दुरितदूरीकरणक्रियार्थत्वासम्भवात् ।

"परिणामः क्रियार्थश्चेद्विषयी विषयात्मना ।"

इति तल्लक्षणात् । न च पंकजमिव चरणमिति पूर्वपदार्थप्रधान उपमितसमास एवास्त्विति शंक्यम्, अमरीणां कबरीभारस्य केशपाशस्य सम्बन्धिनी सौगन्ध्यलोभात्तत्संसृष्टा या भ्रमरी तया मुखरीकृतमिति विशेषणस्यानुगुण्याभावात्तस्य पंकजगतत्वेनैव प्रसिद्धेरिति एतद्विशेषणावगतेन च पादपतनेनाभिव्यज्यमाना गौरीविषया सुराङ्गनागता रतिः कविगता तां पुष्णातीति प्रेयोऽलङ्कारोऽपि बोध्यः ॥ १ ॥

( चन्द्रालोकः )–[1]परस्परतपःसम्पत्फलायितपरस्परौ ।
प्रपञ्चमातापितरौ प्राञ्चौ जायापती स्तुमः ॥ २ ॥

( अ०चं० )–परस्परेति ॥ प्राञ्चौ पुरातनौ जायापती अर्थादुमामहेश्वरौ स्तुमः । किम्भूतौ। प्रपञ्चस्य जीवस्य मातापितृरूपौ निरुपाधिकृपाश्रयत्वाद्धितोपदेष्टृत्वाच्च । तथा परस्परसम्बन्धिन्यास्तपःसम्पत्तेः फलवदाचरितं परस्पर-

---

१ अयं चन्द्रालोकग्रंथः श्रीजयदेवकविविरचितः । एतत्पूर्वं प्राक्तनो ग्रन्थो मूलरूपेण लिखितः। इमं श्लोकमारभ्याप्पय्यदीक्षितैः संगृहीत एवास्ति।स चास्माभिर्नामनिर्देशेन तत्र-तत्र स्फुटीकृतोऽवगंतव्यः।अप्पय्यदीक्षितैश्चायं श्लोकः स्वकीयमङ्गलाचरणरूपेणैव संगृहीतः।

स्वरूपं ययोस्तौ । अत्र परशब्दस्य क्रियाविनिमयविवक्षायां "कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये" इति वार्तिकेन द्विर्भावे असमासवद्भावे "पूर्वपदस्थस्य सुपः सुर्वक्तव्यः" इत्यनेन सुपः स्वादेशे च परस्परशब्दव्युत्पत्तेः पार्वतीतपःसमृद्धिफलायितः परमेश्वरः, परमेश्वरतपःसम्पत्फलायिता च पार्वतीत्यर्थो लभ्यते । तपःसम्पत्तेश्च फलं निरतिशयानन्द इति तदुपमया परस्परं परमप्रेमास्पदत्वलक्षणः शृङ्गारो व्यज्यमानः सौभाग्यातिशयव्यञ्जनमुखेन शिवयोर्भावप्रकर्षे पर्यवस्यतीति सहृदयैराकलनीयम् । मातापितराविति रूपकाभ्यामुक्तोपमयोः संसृष्टिः । परस्परश्चोपमयोः फलायितेत्येकवाचकानुप्रवेशलक्षणः सङ्कर इति दिक् ॥ २ ॥

( कुव० )-उद्घाट्य योगकलया हृदयाब्जकोशं
धन्यैश्चिरादपि यथारुचि गृह्यमाणः ।
यः प्रस्फुरत्यविरतं परिपूर्णरूपः
श्रेयः स मे दिशतु शाश्वतिकं मुकुन्दः ॥ ३ ॥

( अ०चं० )-सम्प्रति प्रतिपिपादयिषितानामलङ्काराणां व्युत्पत्तेः स्वतोऽपुरुषार्थतया फलत्वायोगात्तस्या रसास्वादौपयिकत्वेन फलत्वं प्रेक्षावतां प्रकृतग्रन्थप्रवृत्तये सूचयितुं शृंगाररसाधिदैवतं श्रीकृष्णम्प्रति रसास्वादानन्दं प्रार्थयते-उद्घाट्येति ॥ स मुकुन्दो मह्यं शश्वद्भवं शाश्वतिकं भग्नावरणतया सदा प्रकाशमानं श्रेयो विगलितवेद्यांतरमानन्दं "रसो वै सः" इति श्रुतेः रसपदाभिधेयं दिशतु ददात्वित्यर्थः । यथाश्रुते मुक्तिप्रार्थनायाः प्रकृतेऽसंगत्यापत्तेः । स कः । यो धन्यैर्महामहिमंपुण्यशालिभिर्नारदादिमुनिभिर्योगकलया योगकौशलेन हृदयाब्जस्य उरसो मध्यवर्तिनो हृदयपुण्डरीकस्य कोशं मुकुलमधोमुखतया विद्यमानमुद्घाट्य रेचकप्राणायामेनोर्ध्वमुखं कृत्वा चिराद्बहुकालं यथारुचि यथेच्छं गृह्यमाणोऽपि रामकृष्णाद्यभिमतमूर्तिध्यानगोचरीक्रियमाणोऽपि परितः पूर्णं रूपमस्य तथाभूतोऽपरिच्छिन्नब्रह्मरूपोऽविरतं निरन्तरं मुक्तिदशायां प्रस्फुरति प्रकाशते इति विरोधालङ्कारः । औपासनिकरूपस्य कल्पितत्वेन च तत्परिहारः । अथवा योगिभिरप्यचिन्त्यस्वरूप इति माहात्म्यातिशयवर्णनम् । अत्र योगिगतभगवद्विषयकरतिभावस्य कविगतं तं प्रत्यंगतया प्रेयोऽलङ्कारः ॥ ३ ॥

(चन्द्रालो० )-अलङ्कारेषु बालानामवगाहनसिद्धये ।
ललितः क्रियते तेषां लक्ष्यलक्षणसंग्रहः ॥४॥

(अ०चं०)-चिकीर्षितस्य ग्रन्थस्य प्रयोजनाभिधेये प्रदर्शयति-अलङ्कारेष्विति। एतच्चोभयान्वयि। अलङ्कारेषु अर्थालङ्कारेषूपमादिषु विषये बालानामव्युत्प-

न्नानां तेष्ववगाहनस्य व्युत्पत्तेः सिद्धय इत्यर्थः । तेषां ये लक्ष्यलक्षणे तयोः संग्रह इति नित्यसापेक्षत्वात्समासः । लक्ष्यमुदाहरणम् । अलङ्कारत्वं च रसादिभिन्नव्यंग्यभिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या विषयितासम्बन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वम् । अनुप्रासादिविशिष्टशब्दज्ञानादुपमादिविशिष्टार्थज्ञानाच्च चमत्कारोदयात्तेषु लक्षणसमन्वयः । शब्दार्थयोर्ज्ञाननिष्ठचमत्कृतिजनकताया विषयितयावच्छेदकत्वेन तद्विशेषणीभूतानुप्रासोपमादेस्तन्निष्ठावच्छेदकतावच्छेदकत्वात् । रसवदाद्यलङ्कारसंग्रहाय व्यङ्ग्योपमादिवारणाय च भेदद्वयगर्भसत्यन्तोपादानम् ॥ ४ ॥

(कुव०)–येषां चन्द्रालोके दृश्यन्ते लक्ष्यलक्षणश्लोकाः ।
प्रायस्त एव तेषामितरेषां त्वभिनवा विरच्यन्ते ॥५॥

(अ०चं०)–परकीयग्रन्थापहारशङ्कानिरासायाह–येषामिति ॥ येषामलङ्काराणां चन्द्रालोके चन्द्रालोकाख्यग्रन्थे । त एवेत्यनन्तरं लिख्यंत इति शेषः। तत्र स्थितानामपि केषांचिदलेखनात्प्राय इत्युक्तम् । यथानन्तरश्लोकस्योत्तरार्द्धम् । तत्रैवं दृश्यते " हृदये खेलतोरुच्चैस्तन्वंगीस्तनयोरिव " इति । स्वयं त्वन्यदेव विरचितमिति। एवं च तदीयत्वेन कथनादाशङ्कानिरासः ॥ ५ ॥

## उपमालंकारः १.

(चन्द्रा०)–उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः ।
हंसीव कृष्ण ते कीर्तिः स्वर्गङ्गामवगाहते ॥६॥

(कुव०)–यत्रोपमानोपमेययोः सहृदयहृदयाह्लादकत्वेन चारुसादृश्यमुद्भूततयोल्लसति व्यङ्ग्यमर्यादां विना स्पष्टम्प्रकाशते तत्रोपमालङ्कारः । हंसीवेत्युदाहरणम् । इयं च पूर्णोपमेत्युच्यते । हंसी कीर्तिः स्वर्गङ्गावगाहनमिवशब्दश्चेत्येतेषामुपमानोपमेयसाधारणधर्मोपमावाचकानां चतुर्णामप्युपादानात् ।

यथा वा–"गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः ।
शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ॥"

अत्र यद्यप्युपमानोपमेययोर्नैकः साधारणो धर्मः । उपमाने ईश्वरे चन्द्रगरलयोर्ग्रहणमुपादानं तयोर्मध्ये पूर्वस्य चन्द्र-

स्य शिरसा श्लाघनं वहनमुत्तरस्य गरलस्य कण्ठे नियमनं संस्थापनमुपमेये बुधे गुणदोषयोर्ग्रहणं ज्ञानं तयोर्मध्ये पूर्वस्य गुणस्य शिरसा श्लाघनं शिरःकम्पेनाभिनन्दनमुत्तरस्य दोषस्य कण्ठे नियमनं कण्ठादुपरि वाचानुद्घाटनमिति भेदात्। तथापि चन्द्रगरलयोर्गुणदोषयोश्च बिम्बप्रतिबिम्बभावेनाभेदादुपादानज्ञानादीनां गृह्णन्नित्येकशब्दोपादानेनाभेदाध्यवसायाच्च साधारणधर्मतेति पूर्वस्माद्विशेषः। वस्तुतो भिन्नयोरप्युपमानोपमेयधर्मयोः परस्परसादृश्यादभिन्नयोः पृथगुपादानं बिम्बप्रतिबिम्बभाव इत्यालङ्कारिकसमयः ॥ ६ ॥

( अ०चं० )–सम्प्रत्यर्थालङ्कारेषु निरूपणीयेषु बहलालङ्कारघटकतया सुप्रसिद्धतया च प्रथममुपमालङ्कारं लक्षयति–उपमेति ॥ अयं च लक्ष्यनिर्देशः। शेषं लक्षणम्। सादृश्यलक्ष्मीश्चमत्कृतिजनकता तद्विशिष्टसादृश्यमिति यावत्। धर्मधर्मिणोरभेदोपचाराल्लक्षणं व्याचष्टे–यत्रेति।यत्र काव्ये। वृत्तित्वं सप्तम्यर्थः।तच्च शक्तिलक्षणान्यतरसहकारेण बोधकत्वसम्बन्धेन। उपमानमधिकगुणं चन्द्रादि,उपमेयं वर्ण्यमानं कामिनीवदनादि,सहृदयः काव्यभावनापरिपक्वबुद्धिः,व्यङ्ग्यस्य मर्यादा प्रतीतिनियमरूपा यया सा व्यञ्जनेत्यर्थः। अत्र चोपमानोपमेययोरिति रूपकथनं न तु लक्षणान्तर्गतं, व्यावर्तनीयाभावादात्माश्रयापादकत्वाच्च। उपमानत्वोपमेयत्वयोरुपमाघटितत्वात्। एतच्चाग्रे व्यक्तीभविष्यति। इत्थं चालङ्कारत्वे सति सादृश्यमुपमालङ्कारलक्षणं बोध्यम्। एवमग्रेऽप्यधिकारप्राप्तमलङ्कारत्वविशेषणं बोध्यम् ॥ हंसीत्यादि। अत्र तावदिवार्थे सादृश्ये निरूपितत्वसंसर्गेण हंस्यादेरन्वयः। सादृश्यस्य प्रयोजकत्वसंसर्गेण स्वर्गङ्गावगाहनाश्रयत्वरूपे साधारणधर्मे, तस्य च स्वरूपसम्बन्धेन कीर्तौ, सादृश्यस्य निपातार्थतया नामार्थं प्रति साक्षात्सम्बन्धेन विशेष्यत्वे विशेषणत्वे च बाधकाभावात्। तथा च हंसीनिरूपितसादृश्यप्रयोजकस्वर्गङ्गाकर्मकाऽवगाहनाश्रयत्ववती कीर्तिरिति बोधः। न चैवं स्वर्गङ्गावगाहनमिवशब्दश्चेत्याद्यग्रिमग्रन्थे धात्वर्थस्य समानधर्मत्वोक्तिर्विरुद्धेति वाच्यम्, तदाश्रयत्वस्य समानधर्मत्वे तस्य तथात्वस्यौचित्यायत्तत्वेन विरोधाभावात्। तथा सति तत्रैव कुतो न सादृश्यान्वय इति चेन्न, धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंसर्गेण शाब्दबोधे विशेष्यतया विभक्त्यर्थोपस्थितेर्हेतुत्वात्। न च निपातार्थभिन्नवृत्तित्वेन प्रकारता विशेषणीयेति वाच्यम्, घटो न पश्यतीत्यादौ घटाद्यन्विताभावस्य कर्मतासंस-

र्गेण दर्शनेऽन्वयापत्तेः। यदि तु धात्वर्थेऽपि तात्पर्यवशात्सादृश्यान्वयोऽनुभवसिद्धस्तदा धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासम्बंधेनान्वयबुद्धिं प्रति नञन्योपस्थितेः प्रतिबन्धकत्वमात्रं परिकल्प्य घटो न पश्यतीत्यादौ पूर्वोक्तान्वयबोधो निराकरणीय इति दिक्। एवमरविन्दमिव सुन्दरवदनमित्यादावरविन्दादिनिरूपितसादृश्यस्य प्रयोजकतासंसर्गेण सुन्दरपदार्थैकदेशेऽपि सुन्दरत्वेऽनुभवबलादन्वयस्तद्विशिष्टस्य चाभेदेन मुखादौ। इत्थं चारविन्दनिरूपितसादृश्यप्रयोजकसौन्दर्यवदभिन्नं वदनमित्यन्वयबोधः। अरविन्दसुन्दरमिति समासे त्वरविन्दपदेनारविन्दनिरूपितसादृश्यप्रयोजकं लक्ष्यते। तच्चाभेदेन पदार्थैकदेशे सौन्दर्येऽन्वेति। एवं चारविन्दनिरूपितसादृश्यप्रयोजकाभिन्नसौन्दर्यवदभिन्नं वदनमित्यन्वयबोधः। एकदेशान्वयायोगादरविन्दपदमेव लक्षणया सर्वार्थबोधकं, सुन्दरपदं तु तात्पर्यग्राहकमित्येके। अरविन्दमिव वदनमित्यत्रारविन्दनिरूपितसादृश्यवद्वदनमिति बोधः। सादृश्यस्य निपातार्थतया भेदेन नामान्वये बाधकाभावात्। अरविन्दमिव भातीत्यत्र भातेर्ज्ञानार्थकत्वेऽरविंदपदस्यारविन्दनिरूपितसादृश्यप्रकारकज्ञानविषये लक्षणा। तस्य चाभेदेन मुखादावन्वयः। शेषं तात्पर्यग्राहकम्। पूर्वोक्तदिशा वा सादृश्यस्यैव प्रकारितासंसर्गेण धात्वर्थेऽन्वयः। अत्रैव सौन्दर्येणेति धर्मोपादाने तृतीयार्थस्य प्रयोज्यत्वस्य सादृश्येऽन्वयात्सौन्दर्यप्रयोज्यारविन्दनिरूपितसादृश्यप्रकारकज्ञानविषय इति बोधः। आद्यकल्पे त्वरविन्दपदमेव सर्वार्थबोधकमितरतात्पर्यग्राहकमिति ध्येयम्। इयं च सादृश्यस्य पदार्थान्तरत्वमते शाब्दबोधरीतिरुपदर्शिता। तस्य समानधर्मरूपत्वे तु चन्द्र इव मुखमित्यादौ चन्द्रवृत्तिधर्मवन्मुखमिति बोधः। अत्रैवाह्लादकमिति समानधर्मोपादने इवार्थस्य धर्मस्याह्लादकत्वे पदार्थैकदेशेऽन्वयः। तदसहिष्णुतायां तु चन्द्रनिष्ठाह्लादकत्ववति आह्लादकपदस्य लक्षणा। चन्द्रादिपदं तात्पर्यग्राहकम्। चन्द्रसदृशमित्यत्राप्येकदेशे सादृश्ये चन्द्रान्वयः। ससम्बन्धिकत्वात्। सदृशपदं वा चन्द्रसादृश्यविशिष्टे लाक्षणिकम्। अत्रैवाह्लादकत्वेनेत्युक्तावभेदस्तृतीयार्थस्तस्य च सदृशपदार्थैकदेशे धर्मेऽन्वयः। तथा चाह्लादकत्वाभिन्नचन्द्रवृत्तिधर्मवदभिन्नं मुखमिति बोधः। सदृशपदमेव वा सर्वार्थबोधकमितरतात्पर्यग्राहकमित्येवंविधान्वयसरणिश्रेणयस्तत्रतत्र शब्दव्युत्पत्तिनिपुणैरनुसन्धेया इत्यलं प्रसक्तानुप्रसक्तपरिचिन्तनेन। पूर्णोपमेतीत्यनन्तरमालङ्कारिकैरिति पूरणीयम्। तत्त्वं च विशेषत उपात्तशब्दशक्तिप्रतिपादितोपमानोपमेयकत्वे सति विशेषतः शब्दोपात्तसमानधर्मकत्वे च सति विशेषतः स्वनिरूढशब्दगम्यत्वं स्वपदमुपमापरम्। उपमानलुप्तायामपि लक्षणयोपमानप्रतिपत्तेस्तद्वारणाय शक्तीति।

उपमेयलुप्तायां स्मरवधूयन्तीत्यादावात्मन उपमेयस्याध्याहृतेनात्मानमिति शब्देन बोधनादुपात्तेति शब्दविशेषणम् । एवमपि तन्वीत्यनेनात्रोपमेयस्य काव्यस्य सदृशं न दृश्यत इत्येवंविधायां लुप्तोपमायामुपमानस्य च सदृशपदोपात्तत्वाद्विशेषत इति उपमेयोपमानतावच्छेदकरूपेणेत्यर्थः । धर्मलुप्तायामप्युपमावाचकेन सामान्यतो धर्मस्योपात्तत्वाद्विशेषत इति । उपमाप्रयोजकतावच्छेदकरूपेणेत्यर्थः । वाचकलुप्तायामपि लक्षणयोपमानादिपदेनोपमावगमात्तद्वारणाय विशेषतः स्वनिरूढेति । उपमायां च निरूढा इववद्वायथाशब्दा इत्याद्यभियुक्तोक्तिसंगृहीता इवादयः । अत्र निपातरूपस्येवादेरुपसर्गवद्द्योतकत्वमेव । कथमन्यथा "शरैरुस्रैरिवोदीच्यानुद्धरिष्यन्रसानिव" इत्यादावुस्रादिपदोत्तरतृतीयादिसङ्गतिः । उस्रादेरुद्धरणक्रियां प्रत्यकरणत्वाद् इवार्थे सादृश्यान्वयित्वेन करणीभूतशरविशेषणत्वाभावाच्च । द्योतकत्वे तूस्रादिपदस्योस्रसदृशतयोस्रसदृशैः शरैरिति शरविशेषणत्वेन तृतीयादिसङ्गतिरिति वैयाकरणमतं तु नादरणीयम् । उपास्यते गुरुरित्यादौ धात्वर्थासनक्रियाया अकर्मकतया कर्मलकारानुपपत्तिरूपबाधकस्योपसर्गवाचकतायामिवेवादिवाचकतायामभावेन दृष्टान्तवैषम्यस्य स्फुटत्वात् । विशेषणविशेष्ययोः समानविभक्तिकतायां "विशेष्येण सहैकार्थं भवेद्यत्र विशेषणम् । तत्र लिङ्गादयः प्रायो विशेष्यस्था विशेषणे॥" इत्यनुशासनस्येवोपमानोपमेययोरपि तस्यां "लिङ्गसङ्ख्याविभेदेऽपि ह्युपमानोपमेयता । विभक्तिः पुनरेकैव उपमानोपमेययोः" इत्यनुशासनस्य सत्त्वेनोपमानपदोत्तरतृतीयादेः साधुत्वार्थतयोपपत्तेश्च तस्माद्वाचकत्वमेवेवादीनाम् । युक्तं चैतत् । अन्यथा सकलालङ्कारिकसम्मतस्येवशब्दप्रयोगे श्रौतीत्यस्य दत्तजलाञ्जलित्वापत्तेः । रूढिप्रयोजनयोरन्यतरस्याभावेन चन्द्रादिपदेन चन्द्रसदृशलक्षणायां निषिद्धलाक्षणिकत्वरूपनेयार्थत्वरूपदोषापत्तेश्च । अपि च इवादेर्द्योतकत्वनये चन्द्रादेरुपमानस्य पदार्थैकदेशतया तत्र साधारणधर्मान्वयानुपपत्तिरिति दिक्॥ उपमानेत्यादि । उपमानत्वं चोपमानिरूपकत्वेन विवक्षितत्वं तदाश्रयत्वेन विवक्षितत्वं चोपमेयत्वम् । साधारणत्वं च धर्मस्वारसिकमौपचारिकं बिम्बप्रतिबिम्बभावकृतं श्लेषकृतं वस्तुप्रतिवस्तुभावेन समासभेदाश्रयणेनेत्यनेकधा चित्रमीमांसायां प्रपञ्चितम् । तत्र स्वर्गगावगाहनस्य तथात्वमौपचारिकं कीर्तौ तस्य स्वारसिकत्वाभावात् । उपादानादिति वाचकस्योपादाननिर्देशः । इतरेषां तुशब्देन प्रतिपादनं प्रतिचिन्तनीयम् । साधारण्यप्रकारविशेषोपदर्शनायोदाहरणान्तरमाह–यथा वेति ॥ गुणदोषाविति । गुणदोषावर्थात्परस्य गृह्णन् जानन् बुधः पण्डितः पूर्वं पूर्वनिर्दिष्टं गुणं शिरसा श्लाघते आन्दोलितेन शिरसा

अभिनन्दयति परं परतो निर्दिष्टं दोषं कण्ठे नियच्छति निरुणद्धि। वाचा कण्ठाद्बहिर्नोद्घाटयतीत्यर्थः। क इव। इन्दुक्ष्वेडौ चन्द्रगरले गृह्णन्नुपाददान ईश्वरो हर इव सोपि पूर्वं चन्द्रं शिरसा श्लाघते तत्पूर्वकं धारयति। परं च गरलं कण्ठे नियच्छति स्थापयतीति। "क्ष्वेडस्तु गरलं विषम्" इत्यमरः। शङ्कते-अत्र यद्यपीति॥ साधारणस्तत्त्वेनाभिमतो धर्मः 'गृह्णन् शिरसा श्लाघते पूर्वम्' इत्यादिनोक्तो यद्यपि नैको न साधारण इति योजना। गृह्णन्नित्यादिनोक्त एकोऽपि धर्मः साधारणो नेति वा। यथाश्रुते साधारणस्य साधारणत्वाभावोक्तेरसङ्गतत्वापत्तेः साधारण्याभावे हेतुरुपमान इत्यारभ्य इति भेदादित्यन्तेनोक्तः। समाधत्ते-तथापीति॥ वस्तुगत्या साधारण्याभावेऽपीत्यर्थः। चन्द्रगरलयोरित्यादि यथाक्रमं चन्द्रगुणयोर्गरलदोषयोश्चेत्यर्थः। बिम्बप्रतिबिम्बभावेन प्रतीयमानसादृश्ययोरुपमानोपमेयधर्मयोर्भिन्नशब्दोपात्तत्वरूपेणाभेदादभेदाध्यवसायात्। एतच्च साधारणधर्मतेत्यग्रेतनेनान्वितम्। ज्ञानादीत्यादिना शिरसा वहनाभिनन्दनयोः कण्ठस्थापनतद्बहिरनुद्घाटनयोश्च संग्रहः। गृह्णन्नित्यादिना च शिरसा श्लाघते, कण्ठे नियच्छतीत्यनयोः संग्रहः॥ अभेदाध्यवसायादिति। अभेदस्याध्यवसायादाहार्यनिश्चयादित्यर्थः॥ साधारणधर्मतेति। साधारणधर्मत्वाभिमानविषयतेत्यर्थः। पूर्वस्मात्पूर्वोदाहरणादिति विशेष इत्यन्वयः। न चैवं साधर्म्यप्रतीत्युपपादनेति। वस्तुतस्तदभावात्कथमुपमालक्षणसमन्वय इति वाच्यम्, चमत्कारविशेषप्रयोजकसाधारणत्वाध्यवसायविषयधर्मत्वस्यैवोपमालक्षणत्वमित्यभिप्रायादिति। लोके बिम्बप्रतिबिम्बभावव्यपदेशस्य गगनजलाशयादिगतचन्द्रादिविषयतया प्रसिद्धेः॥ कथं प्रकृते तद्व्यपदेश इत्याशङ्कायामाह-वस्तुत इत्यादि॥ अभिन्नयोस्तथाध्यवसितयोः पृथगिति भिन्नशब्देनेत्यर्थः॥ बिम्बप्रतिबिम्बभाव इति। बिम्बप्रतिबिम्बभावपदवाच्यमित्यर्थः॥ समय इति। सङ्केत इत्यर्थः॥ ६॥

(चन्द्रालो०)-वर्ण्योपमानधर्माणामुपमावाचकस्य च।
एकद्वित्र्यनुपादानैर्भिन्ना लुप्तोपमाष्टधा ॥ ७ ॥
तडिद्गौरीन्दुतुल्यास्या कर्पूरन्ती दृशोर्मम ।
कान्त्या स्मरवधूयन्ती दृष्टा तन्वी रहो मया ॥ ८ ॥
यत्तया मेलनं तत्र लाभो मे यश्च तद्रतेः ।
तदेतत्काकतालीयमवितर्कितसम्भवम् ॥ ९ ॥

( कुव० )–उपमेयादीनां चतुर्णां मध्ये एकस्य द्वयोस्त्रयाणां वा प्रतिपादकशब्दाभावेन लुप्तोपमेत्युच्यते । सा चाष्टधा । यथा । वाचकलुप्ता १, धर्मलुप्ता २, धर्मवाचकलुप्ता ३, वाचकोपमेयलुप्ता ४, उपमानलुप्ता ५, वाचकोपमानलुप्ता ६, धर्मोपमानलुप्ता ७, धर्मोपमानवाचकलुप्ता च ८ इति । तत्रोपमानलोपरहिताश्चत्वारो भेदास्तडिद्गौरीत्यादि-श्लोकेन प्रदर्शिताः । तद्वंतो भेदा उत्तरश्लोकेन दर्शिताः । तत्र तडिद्गौरीत्यत्र वाचकलोपस्तडिदिव गौरीत्यर्थे " उपमानानि सामान्यवचनैः " इति समासविधायकशास्त्रकृतः । इन्दुतुल्यास्येत्यत्र धर्मलोपः, स त्वैच्छिको न शास्त्रकृतः । कान्त्या इन्दुतुल्यास्येत्यपि वक्तुं शक्यत्वात । कर्पूरन्तीत्यत्र धर्मवाचकलोपः । कर्पूरमिवाचरन्तीत्यर्थे विहितस्य कर्पूरवदानन्दात्मकाचारार्थकस्य क्विप इवशब्देन सह लोपात् । अत्र धर्मलोप ऐच्छिकः । नयनयोरानन्दात्मकतया कर्पूरन्तीति तदुपादानस्यापि सम्भवादिति । कान्त्या स्मरवधूयन्तीत्यत्र वाचकोपमेयलोपः । अत्र कान्त्येति विशेषणसामर्थ्यात्स्वात्मानं कामवधूमिवाचरन्तीत्यर्थस्य गम्यमानतया स्वात्मन उपमेयस्य सहोपमावाचकेनानुपादानात्स त्वैच्छिकः स्वात्मानं स्मरवधूयन्तीत्युपमेयोपादानस्यापि सम्भवात् । काकतालीयमित्यत्र काकतालशब्दौ वृत्तिविषये काकतालसमवेतक्रियावर्तिनौ तेन काकागमनमिव तालपतनमिव काकतालमितीवार्थे " समासाच्च तद्विषयात " इति ज्ञापकात्समासः । उभयत्रोपमेयं स्वस्य कचिद्गमनं तत्रैव रहसि तन्व्या अवस्थानं च । तेन स्वस्य तस्याश्च समागमः काकतालसमागमसदृश इति फलति । ततः काकतालमिव काकतालीयमिति द्वितीयस्मिन्निवार्थे " समासाच्च तद्वि-

षयात्" इति सूत्रेण "इवे प्रतिकृतौ" इत्यधिकारस्थेन छप्रत्ययः । तथा च पतनदलितं तालफलं यथा काकेनोपभुक्तमेवं रहोदर्शनक्षुभितहृदया तन्वी स्वेनोपभुक्तेति तदर्थः । ततश्चात्र काकागमनतालपतनसमागमरूपस्य काककृततालफलोपभोगरूपस्य चोपमानस्यानुपादानात्प्रत्ययार्थोपमायामुपमानलोपः । समासार्थोपमायां वाचकोपमानलोपः । सर्वोऽप्ययं लोपश्छप्रत्ययविधायकशास्त्रकृतः । अवितर्कितसम्भवमिति साधारणधर्मस्यानुपादाने प्रत्ययार्थोपमायां धर्मोपमानलोपः । समासार्थोपमायां धर्मोपमानवाचकलोप इति सूक्ष्मया दृष्ट्याऽवधारितव्यम् । एतेषामुदाहरणान्तराणि विस्तरभयान्न लिख्यन्ते ॥ ७ ॥ ८ ॥ ९ ॥

( अ०चं० )-पूर्णायामुपमानादिसमग्रतानियमप्रसिद्धेस्तद्विपरीतायां लुप्तोपमायां सर्वलोपनियमाशंकानिरासाय लक्षणपूर्वकं तां विभजते-वर्ण्यस्यादिना ॥ चकारो वाशब्दार्थे । तदनन्तरं च लोपे इत्यध्याहार्यम् । एवं चेतरेतरयोगाविवक्षया वर्ण्यस्योपमानस्य धर्मस्योपमावाचकस्य वा लोपेऽन्यतमानुपादाने लुप्तोपमा । सा च एकद्वित्र्यनुपादानैरष्टधा भिन्नेति पूर्वापराभ्यामुक्तं भवति । तडिदित्याद्युदाहरणान्यर्थतो व्याचष्टे-उपमेयादीनामिति ॥ वस्तुतो लाघवात्पूर्णाभिन्नत्वं लक्षणम्बोध्यम् । लक्षणवाक्यगतं क्रममुपेक्ष्योदाहरणक्रमानुसारेण विभागं दर्शयति-यथेत्यादि ॥ वाचकलुप्तेति । वाचकत्वं चात्रानुपूर्वीविशेषवत्तयोपमाबोधेन निरूढत्वम् । तच्च शक्त्या निरूढलक्षणया वा । तत्राद्यमिवादेर्द्वितीयन्तु सुहृत्पदादेरिति । तदभावात्तडिद्गौरीत्यादौ वाचकलोपः।समासानुशासनेन निरूढलक्षणावगमेऽप्यानुपूर्वीविशेषवत्तया शब्दविशेषस्य तद्बोधनात् ॥ शास्त्रकृतमिति । शास्त्रप्रयुक्त इत्यर्थः ॥ कर्पूरन्तीत्यत्रेति । अत्र "सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः" इत्यनेन विहितः क्विप् लुप्तोपि स्मर्यमाणो धर्ममात्ररूपमाचारं बोधयति । कर्पूरपदं च लक्षणया कर्पूरसादृश्यम् । तस्य चातिरिक्तत्वे पूर्ववत्प्रयोजकतासंसर्गेणाचारेऽन्वयो धर्मरूपत्वे त्वभेदेन । वस्तुतस्तु क्विब्लोपाप्रतिसन्धानेपि तथाबोधात्कर्पूरादिशब्दा एव कर्पूरादिसादृश्यप्रयोजकाभिन्नं तत्सादृश्याभिन्नं वाऽऽचारं लक्षयन्तीति युक्तम् । ननु वाचकस्येवादेरनुपादानाल्लोपो युक्तः । साधार-

णधर्मस्य त्वाचाररूपस्य क्विबुपात्ततया कथं लोपस्तत्राह—कर्पूरवदानन्दात्मकाचारार्थस्य क्विप इति॥ कर्पूरस्येवेतीवार्थे वतिः। आनन्दात्मको जनकतासम्बन्धेन। वस्तुगत्या आनन्दस्वरूपो य आचारस्तद्बोधकस्येत्यर्थः। ननु क्विब्लोपाज्ज्ञानेऽप्याचारप्रतीतेः कर्पूरादिपदानामेव तद्बोधकत्वपक्षे कथं धर्मलोपः सङ्गमनीय इति चेत्। अत्र प्राञ्चः। एवमपि तद्वाचकतया विहितस्य क्विपो लोपाल्लोपव्यपदेशः। अत एवात्र समानार्थकः क्यच् नोपात्तस्तस्यालुप्तत्वादित्याहुः। नव्यास्तु धर्ममात्ररूपस्याचारस्योपादानेऽप्यानन्दत्वादिना विशेषरूपेणानुपादानाद्धर्मलोपो युक्त एव। अन्यथा इन्दुतुल्यास्येत्यादेर्धर्मलुप्तोदाहरणस्यासङ्गतत्वापत्तेः। न चैवं क्यजादावपि धर्मलुप्ता स्यादिति वाच्यम्, इष्टापत्तेरित्याहुः—स्मरवधूयन्तीत्यत्रेति॥ ननु "उपमानादाचारे" इति कर्मभूतादुपमानादाचारे क्यचो विधानात्स्मरवधूं रतिमिवाचरन्तीत्यवगमेऽप्यात्मानमन्यां वेति कथं निर्णयस्तत्राह—विशेषणेति॥ रत्यनुरूपाचरणस्य कान्तिकरणकत्वरूपविशेषणसामर्थ्यादित्यर्थः। कान्तेः स्वरसतः स्वीयत्वावगमादिति भावः। न चात्मन उपमेयस्य तन्वीपदेनोपादानात्कथं लोप इति वाच्यम्, तस्या द्वितीयांततया कर्मभूतोपमेयासमर्पकत्वादात्मानमित्यध्याहृतेनैव तद्बोधात्। अत्र च स्मरवधूपदेन स्मरवधूसादृश्यं लक्ष्यते। तस्य च प्रयोजकत्वसंसर्गेणाभेदेन वाऽऽचारेऽन्वयः। तथा च स्मरवधूसादृश्याभिन्न आत्मकर्मको य आचारस्तदाश्रयस्तन्वीति बोधः॥ काकतालीयेति। वृत्तिविषये समासविषये॥ ज्ञापकादिति। इवार्थे समासाभावे तद्विषयादित्यनेनेवार्थविषयसमासानुवादोऽनुपपन्नस्तज्ज्ञापक इत्यर्थः। उभयत्र काकागमनतालपतनयोः। उपमेयमित्यन्तरं क्रमेणेति शेषः॥ तेनेति। काकतालसमवेतक्रियापरयोः काकतालपदयोरिवार्थे समासेनेत्यर्थः॥ काकतालसमागमेति। अयम्भावः। काकागमनतालपतनयोरुपमानत्वे तदुपमेययोः स्वीयगमनतन्व्यवस्थानयोः पृथगुपात्तत्वेनोपमेयतयाऽन्वयायोगात्काकतालसमागम एवोपमानम्। इत्थं च काकतालसमागमसदृशं काकतालपदार्थस्तस्य चाभेदेन स्वीयतन्वीसमागमरूप उपमेयेऽन्वय इति॥ तत इति। तादृशसमासोत्तरमित्यर्थः॥ इति तदर्थ इति। काकतालपदलक्षितस्य काककृततालफलोपभोगसदृशस्याभेदेन तन्वीरतिलाभरूपेणोपमेयेनान्वयादिति भावः। अत्र पतनदलितमिति रहोदर्शनक्षुभितहृदयेति च बिम्बप्रतिबिम्बभावापन्नधर्मस्वरूपकथनं नत्वेवमन्वयाकार इति बोध्यम्। न च सकृदुच्चारिताभ्यां काकतालपदाभ्यां कथमुपमानद्वयावगम इति वाच्यम्, अनुभवानुसार्यनुशासनेन व्युत्पत्तिवैचित्र्यस्य स्फुटं प्रतिपत्तेरिति। एवं दुरूहत्वात्पद्यं व्याख्याय तत्रोपमानलुप्तादींश्चतुरोऽपि भेदान्प्रदर्शयितुमाह—ततश्चेति॥ काकागमनेत्यादि। काकाग-

मनतालपतनरूपो यः समागमस्तद्रूपस्येत्यर्थः। इदं च काकागमनमिव तालपतनमिवेति महाभाष्यगतविग्रहवाक्यविरोधशंकापरिहारायोक्तम्। समागमस्य तादृशक्रियाद्वयाभिन्नत्वेनोक्तयुक्त्या तस्योक्तार्थ एव पर्यवसानात्। विशिष्टोपमायां विशेषणोपमावगतिवत्समागमोपमायामपि। तदवयवक्रिययोर्यथायोगं गम्यमानामुपमामभिप्रेत्य महाभाष्यकृतां तादृशविग्रहवाक्यप्रणयनमित्याशयः॥ धर्मस्यानुपादान इति। तत्स्थाने "अभवत्किं ब्रवीमि ते" इति पाठ इति भावः॥ ७॥ ८॥ ९॥

इत्यलंकारचन्द्रिकायां कुवलयानन्दटीकायामुपमालङ्कारप्रकरणम्॥१॥

---

## अनन्वयालंकारः २.

(चन्द्रा०)-उपमानोपमेयत्वं यदेकस्यैव वस्तुनः।
इन्दुरिन्दुरिव श्रीमानित्यादौ तदनन्वयः॥ १॥

(कुवलयानन्दः)-एकस्यैव वस्तुन उपमानोपमेयवर्णनमनन्वयः। वर्ण्यमानमपि स्वस्य स्वेन साधर्म्यं नान्वेतीति व्युत्पत्तेः। अनन्वयिनोऽप्यर्थस्याभिधानं सदृशान्तरव्यवच्छेदेनानुपमत्वद्योतनाय। इन्दुरिन्दुरिव श्रीमानित्युक्ते श्रीमत्त्वेन चन्द्रस्य नान्यः सदृशोऽस्तीति सदृशान्तरव्यवच्छेदो लक्ष्यते। ततश्च स्वेनापि सादृश्यासम्भवादनुपमेयत्वे पर्यवसानम्।

यथा वा-गगनं गगनाकारं सागरः सागरोपमः।
रामरावणयोर्युद्धं रामरावणयोरिव॥

पूर्वोदाहरणे श्रीमत्त्वस्य धर्मस्योपादानमस्ति। इह तु गगनादिषु वैपुल्यादेर्धर्मस्य तत्रास्तीति विशेषः॥ १०॥

(अ०चं०)-यद्यप्युपमाननिरूपणानन्तरं तन्मूलालङ्कारेषु सम्भवत्सादृश्योपमेयोपमैव प्रथमं निरूपयितुमुचिता, न त्वारोपितसादृश्यनिबन्धनोऽनन्वयस्तथापि तं द्वितीयसदृशव्यवच्छेदफलकतया तृतीयसदृशव्यवच्छेदफलिकामुपमेयोपमामपेक्ष्य शीघ्रोपस्थितिकमभिप्रेत्य प्रथमन्निरूपयति-उपमानोपमेयत्वमिति। उपमानत्वमुपमेयत्वं चेत्यर्थः। द्वन्द्वान्ते श्रूयमाणत्वात्। विवक्ष्यत इति च शेषः। एवं चैकस्यैव वस्तुनो

यदुपमानत्वमुपमेयत्वं च विवक्ष्यते तदनन्वयः। असम्भवशङ्कानिरासाय मध्ये उदाहरणोक्तिः। ननूक्तलक्षणस्य "भणितिरिव मतिर्मतिरिव चेष्टा" इत्यादिरशनोपमायामतिव्याप्तिः। तत्र मत्यादेरेकस्यैव वस्तुन उपमानत्वस्योपमेयत्वस्य च वर्णनात्। अथैकस्य वस्तुनो यदेकनिरूपितमुपमानत्वमुपमेयत्वं चेति विवक्षितमेकपदस्यावृत्तिकल्पनात्। इत्थं च रशनोपमायां मत्यादेश्चेष्टादिनिरूपितमुपमानत्वं भणितीत्यादिनिरूपितं तूपमेयत्वमित्येकनिरूपितोपमानोपमेयत्वविरहान्नातिव्याप्तिरित्युच्यते, तदा "खमिवजलं जलमिव खम्" इत्युपमेयोपमायामतिव्याप्तिः। तत्रैकस्यैव वस्तुनो गगनस्यैकजलनिरूपितस्योपमानत्वस्योपमेयत्वस्य च वर्णनादिति चेन्मैवम्, एकस्यैवेति विरोधद्योतकैवकारबलेन स्वाश्रयनिरूपितयोरुपमानोपमेयत्वयोर्लाभेन क्वाप्यतिप्रसङ्गाभावात्। अस्ति हि "इन्दुरिन्दुरिव" इत्यनन्वये उपमानत्वमुपमेयत्वं च स्वाश्रयेन्दुनिरूपितं न तु रशनोपमायां वेति सङ्क्षेपः॥ अनन्वयपदप्रवृत्तिनिमित्तमाह–वर्ण्यमानमपीति॥ नान्वेतीति। न सम्बध्यत इत्यर्थः। साधर्म्यस्य भेदघटितत्वादिति भावः॥ नन्वेवं सत्यसम्बद्धप्रलापत्वापत्तिरित्यत आह–अनन्वयिनोऽपीति। बाधितस्यापीत्यर्थः॥ अर्थस्य साधर्म्यस्य अभिधानमाहार्यारोपरूपतया। प्रतिपादनं सदृशान्तरव्यवच्छेदेन सदृशान्तरव्यावृत्तिबोधद्वारेण। एतदेव विशदयति–इन्दुरित्यादिना॥ इत्थं च सदृशान्तरव्यावृत्तिसूचनद्वाराऽनुपमत्वद्योतनरूपप्रयोजनत्वादापाततो रुद्ररोदनार्थवादवद्द्वारमात्रतया सादृश्यप्रतिपादनेऽपि नासम्बद्धप्रलापतापत्तिरिति भावः। उदाहरणान्तरमाह–यथा वेति॥ गगनाकारं गगनसदृशम्। इवेत्यतः प्राक् युद्धमित्यध्याहार्यम्। उदाहरणान्तरप्रदर्शने बीजमाह–पूर्वोदाहरणेति॥ वैपुल्यादेरित्यादिपदाद्गांभीर्यदारुणत्वयोः सङ्ग्रहः॥ १०॥

इत्यलङ्कारचन्द्रि० कुवलयानन्दटीकायामनन्वयालङ्कारप्रकरणम्॥ २॥

---

## उपमेयोपमालंकारः ३.

(चन्द्रा०)–पर्यायेण द्वयोस्तच्चेदुपमेयोपमा मता।
धर्मोऽर्थ इव पूर्णश्रीरर्थो धर्म इव त्वयि॥ ११॥

(कुवल०)-द्वयोः पर्यायेणोपमानोपमेयत्वकल्पनं तृतीयसदृशव्यवच्छेदार्थम्। धर्मार्थयोः कस्यचित् केनचित्सादृश्ये वर्णिते तस्याप्यन्येन सादृश्यमर्थसिद्धमपि मुखतो वर्ण्यमानं तृतीयसदृशव्यवच्छेदं फलति॥

यथा वा-खमिव जलं जलमिव खं
हंस इव चन्द्रश्चन्द्र इव हंसः ।
कुमुदाकारास्तारा-
स्ताराकाराणि कुमुदानि ॥

पूर्वत्र पूर्णश्रीरिति धर्म उपात्तः इह निर्मलत्वादिधर्मो नोपात्त इति भेदः । उदाहरणद्वयेऽपि प्रकृतयोरेवोपमानोपमेयत्वकल्पनम् । राज्ञि धर्मार्थसमृद्धेः शरदि गगनसलिलादिनैर्मल्यस्य च वर्णनीयत्वात । प्रकृताप्रकृतयोरप्येषा सम्भवति ।

यथा-गिरिरिव गजराजोऽयं गजराज इवोच्चैर्विभातिगिरिः।निर्झर इव मदधारा मदधारेवास्य निर्झरः स्रवति॥११॥

( अ०चं० )-अथोपमेयोपमां लक्षयति-पर्यायेणेति । अयौगपद्येनेत्यर्थः । वाक्यभेदेनेति यावत् । तद् उपमानोपमेयत्वं विवक्ष्यत इति शेषोऽत्रापि बोध्यः । उपमेयोपमेति लक्ष्यनिर्देशः । उपमेयेनोपमेति व्युत्पत्तेः । धर्मोऽर्थ इवेत्युदाहरणम् । अर्थो धनम् । पूर्णश्रीः पूर्णसमृद्धिः । अत्र च धर्मार्थयोर्द्वयोर्वाक्यभेदेनोपमानत्वमुपमेयत्वं च वर्णितम् । तत्राद्यवाक्येऽर्थस्योपमानत्वं धर्मस्योपमेयत्वम् । द्वितीये तु तद्विपर्यासेन धर्मस्योपमानत्वमर्थस्योपमेयत्वमिति लक्षणसमन्वयः । उपमानोपमेयत्वमात्रोक्तावनन्वयेऽतिव्याप्तेर्द्वयोरित्युक्तम् । एवमपि "समत्वं शरदि प्रापुरहो कुमुदतारकाः" इत्युभयविश्रांतसादृश्यायामुपमायामतिव्याप्तिः । तत्र द्वयोः कुमुदतारकयोः सादृश्याश्रयत्वरूपोपमेयत्वस्येव तत्प्रयोगित्वरूपस्योपमानत्वस्याप्यर्थतः प्रतीतेरतः पर्यायेणेत्युक्तम् । ननु "भणितिरिव मतिर्मतिरिव चेष्टा चेष्टेव कीर्तिरतिविमला" इति रशनोपमायामतिव्याप्तिः । तत्र द्वयोर्मतिचेष्टयोर्वाक्यभेदेनोपमानोपमेयत्ववर्णनादिति चेन्न । द्वयोरित्यनेन परस्परमुपमानोपमेयत्वस्य विवक्षितत्वात् । अन्यथा पर्यायपदेनैवानन्वयवारणे तद्वैयर्थ्यापत्तेरिति संक्षेपः । ननूपमाप्रतीपोभयरूपाया उपमाद्वयरूपाया वा उपमेयोपमाया अलङ्कारान्तरत्वे किम्बीजमित्यत आह-द्वयोरिति ॥ तथा चार्थविशेषद्योतकतया चमत्कृतिवैलक्षण्यमेव तत्र बीजमिति भावः । कथं तृतीयसदृशव्यवच्छेदलाभस्तत्राह-धर्मार्थयोरिति ॥ धर्मार्थयोर्मध्य इत्यर्थः । मुखतः शब्देन । तथा च प्राप्तस्य पुनर्वचनं तदितरपरिसंख्यार्थमिति न्यायादिहापि तृतीयसदृश-

व्यावृत्तिलाभ इति भावः ॥ खमिवेति । शरद्वर्णनमिदम् । खमाकाशमिव जलं कालुष्यापगमेन निर्मलत्वातिशयात् । शेषं स्पष्टम् । निर्मलत्वादीत्यादिपदेन शैत्यातिशयपरिग्रहः । गिरिरिवेति । अत्र गजः प्रकृतः । अयमिति प्रकृतपरामर्शिसर्वनामनिर्दिष्टत्वात् । अत एवोपक्रमादग्रेप्यस्य मदधारेत्यन्वयो बोध्यः । अत्र पूर्वार्द्धे उच्चकैर्विभातीति समानधर्म उपात्तः । उत्तरार्द्धे च स्रवतीति स उक्त इति दिक् ॥ ११ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानंदटीकायामुपमेयोपमालङ्कारप्रकरणम् ॥ ३ ॥

---

## प्रतीपालंकारः ४.

( चन्द्रा० )--प्रतीपमुपमानस्योपमेयत्वप्रकल्पनम् ।
त्वल्लोचनसमं पद्मं त्वद्वक्त्रसदृशो विधुः ॥ १२ ॥

( कुव० )–प्रसिद्धोपमानोपमेयभावप्रातिलोम्यात्प्रतीपम् ।
यथा वा–यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिंदीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी ।
येपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥ १२ ॥

( अ०च० )–प्रतीपमिति ॥ प्रतीपमिति लक्ष्यनिर्देशः । ननूपमानोपमेयभावस्य वैवक्षिकतया मुखादेरप्युपमानत्वसम्भवाच्चन्द्र इव मुखमित्युपमायामतिव्याप्तिरित्यत आह–प्रसिद्धेति ॥ प्रसिद्धोपमानस्योपमेयभाव उपमेयत्वं प्रतीपं प्रतीपपदवाच्यम् । कुतः । प्रातिलोम्यात्प्रसिद्धोपमानप्रतिकूलत्वात् । उपमेयभावप्रातिलोम्यादित्यविसर्गपाठेऽपि प्रसिद्धोपमानस्य य उपमेयभावस्तस्य प्रातिलोम्यादुपमानप्रतिकूलत्वादुपमानस्योपमेयत्वकल्पनं प्रतीपमित्युच्यत इति व्याख्येयम् । ननु प्रसिद्धस्योपमानोपमेयभावस्य वैपरीत्यादिति यथाश्रुतरीत्यैवंविधप्रातिलोम्यस्य तृतीयपञ्चमप्रतीपभेदाव्यापित्वेन प्रतीपपदप्रवृत्तिनिमित्तत्वायोगादिति । एवं चोक्तप्रकारेणोपमानप्रातिकूल्यस्य प्रतीपपदप्रवृत्तिनिमित्तत्वकथनेन प्रसिद्धोपमानप्रतिकूलधर्मः ॥ प्रतीपमिति । प्रतीपपञ्चकसाधारणं सामान्यलक्षणमिति सूचितम् । अत एव पञ्चमप्रतीपव्याख्यानावसरे वक्ष्यति ॥ उपमानप्रातिलोम्यादिति । प्रतिकूलत्वं च तिरस्कारप्रयोजकत्वम् । एतस्य च सकलप्रतीपभेदसाधारण्यं तत्र तत्र स्फुटीकरिष्यते ॥

यथा वेति । प्रोषितस्य प्रियां प्रति वियोगवेदनानिवेदनमिदम् । अयि प्रिये त्वदीयसादृश्येन विनोदनं विनोदो विरहयापनं तन्मात्रमपि मम दैवेन न क्षम्यते । एतदेव दर्शयति—यदित्यादिना ॥ त्वन्नेत्रयोः समाना साधारणी कान्तिः शोभा यस्य तथाविधं यदिन्दीवरं तत्सलिले मग्नम् । वर्षर्तुना जलवृद्धेः । तव मुखस्य च्छायया कान्त्या अनुकारी सदृशः शशी मेघैरन्तरितस्तिरोहितः । येऽपीत्यपिभिन्नक्रमः त्वद्गमनसदृशगतयो ये राजहंसास्तेऽपि गता इति । अत्र कान्तीत्यादिधर्मोपादानात्पूर्वोदाहरणवैलक्षण्यं बोध्यम् । ननूपमानादुपमेयस्याधिक्यवर्णनारूपाद्व्यतिरेकालङ्कारादस्य को भेदः । उच्यते । तत्र वैधर्म्यप्रयुक्तमुपमेयस्याधिक्यं विवक्षितमिह तूपमानतामात्रप्रयुक्तत्वात्साधर्म्यप्रयुक्तमिति ॥ १२ ॥

(चन्द्रा०) अन्योपमेयलाभेन वर्ण्यस्यानादरश्च तत् ।
अलं गर्वेण ते वक्त्र कान्त्या चन्द्रोऽपि तादृशः ॥ १३ ॥

(कुवल०)—अत्युत्कृष्टगुणतया वर्ण्यमानस्यान्यत्र स्वसादृश्यमसहमानस्योपमेयं किञ्चित्प्रदर्श्य तावता तस्य तिरस्कारो द्वितीयं प्रतीपं पूर्वस्मादपि विच्छित्तिविशेषशालि । यथा वा—गर्वमसंवाह्यमिमं लोचनयुगलेन किं वहसि भद्रे । सन्तीदृशानि दिशिदिशि सरस्सु ननु नीलनलिनानि ॥ १३ ॥

(अ०चं०)—प्रतीपान्तरमाह—अन्योपमेयेति ॥ अन्यदवर्ण्यमुपमानं तद्रूपं यदुपमेयं तस्य लाभेन वर्णनीयस्य मुखादेरनादरो गर्वपरिहारोपि तत्प्रतीपमित्यर्थः । तस्य गर्वप्रसक्तिपूर्वकत्वेनोपमेयताया अपि पूर्वमप्राप्योपमानतिरस्कृतिविशेषप्रयोजकत्वादिति भावः । अत एव लाभेनेत्युक्तं न तु सत्त्वेनेति । अप्राप्तप्राप्तेर्लाभशब्दार्थत्वात् ॥ विच्छित्तिविशेषेति । चमत्कारोत्कर्ष इत्यर्थः । उक्तरीत्योपमानतिरस्कारातिशयप्रतीतेरिति भावः॥ गर्वमिति । असंवाह्यं संवाहनायोग्यमपरिमितमिति यावत् । भद्रे शोभने इति सम्बोधनम् । नन्विति हेत्वर्थे । अव्ययानामनेकार्थत्वात् । पूर्वोदाहरणे कान्त्येति समानधर्मोपादानमिह तु नेति भेदः ॥ १३ ॥

(चन्द्रा०)—वर्ण्योपमेयलाभेन तथान्यस्याप्यनादरः ।
कः क्रौर्यदर्पस्ते मृत्यो त्वत्तुल्याः सन्ति हि स्त्रियः ॥ १४ ॥

( कुवल० )—अत्युत्कृष्टगुणतया क्वचिदप्युपमानभावमसहमानस्यावर्ण्यस्य वर्ण्योपमेयं परिकल्प्य तावता तस्य तिरस्कारः । पूर्वप्रतीपवैपरीत्येन तृतीयं प्रतीपम् ।

यथा वा—अहमेव गुरुस्सुदारुणाना-
मिति हालाहल मा स्म तात दृप्यः ।
ननु सन्ति भवादृशानि भूयो
भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥ १४ ॥

( अ० च० )—वर्ण्योपमेयेति ॥ अन्यस्य वर्ण्यस्य । अनादरोऽपि तथा । प्रतीपमित्यर्थः ॥ अहमेवेति । सुदारुणानामतितीव्राणाम् । गुरुः श्रेष्ठः । तातेति सानुकम्पसम्बोधने ॥ मा स्म दृप्य इति । दर्पं मा कृथा इत्यर्थः ॥ १४ ॥

( चं० )-वर्ण्येनान्यस्योपमाया अनिष्पत्तिवचश्च तत् ।
मुधाऽपवादो मुग्धाक्षि त्वन्मुखाभं किलाम्बुजम् ॥ १५ ॥

( कुवल० )—अवर्ण्ये वर्ण्योपमित्यनिष्पत्तिवचनं पूर्वेभ्य उत्कर्षशालि चतुर्थं प्रतीपम् । उदाहरणे मुधापवादत्वोक्त्योपमित्यनिष्पत्तिरुद्घाटिता ।

यथा वा—आकर्णय सरोजाक्षि वचनीयमिदं भुवि ।
शशांकस्तव वक्त्रेण पामरैरुपमीयते ॥ १५ ॥

(अ०चं०)—वर्ण्येनान्यस्येति ॥ निरूपितत्वं तृतीयार्थः। वर्ण्यनिरूपिता यान्यस्यावर्ण्यस्योपमा तस्या इत्यर्थः । अनिष्पत्तिवचः उच्यमाना अनिष्पत्तिः । " कृदभिहिते " इति न्यायात् । तत्प्रतीपम् ॥ मुधेति । किलेति वार्तायाम् । त्वन्मुखाभमम्बुजमिति वार्ता मुधा निष्प्रयोजनोऽपवादः। अलीकार्थकत्वेनापवादस्य निष्प्रयोजनत्वम् ॥ उत्कर्षेति । उपमानतिरस्कारातिशयप्रयोजकत्वरूपेत्यर्थः ॥ मुधापवादत्वोक्त्येति । उक्तार्थमेतत् ॥ आकर्णयेति । वचनीयमलीकतया निन्दितम्, अत एव भुवीत्युक्तम् । लोकान्तरे मुखसन्निधानेन विशेषादर्शनादलीकत्वग्रहायोगात् । सन्निधानेऽपि विशेषाग्रहणात्पामरैरित्युक्तम्। अत्र वचनीयं पामरैरित्येताभ्यामुपमितेरनिष्पत्तिः प्रकाश्यते ॥ १५ ॥

( चन्द्रा० )-प्रतीपमुपमानस्य कैमर्थ्यमपि मन्वते ।
दृष्टं चेद्वदनं तस्याः किं पद्मेन किमिन्दुना ॥ १६ ॥

कारणान्वितत्वेन कथनमिति तन्निरासः । प्रकारपञ्चकेऽपि कारणान्विताभावस्यार्थतो गम्यत्वात्कथनेति ॥ अप्यलाक्षेति । लाक्षारसेन आसमन्तात्सिक्तं लाक्षारसासिक्तम् । पश्चान्नञ्समासः । तस्याः कामिन्याः ॥ अपीतेति । अपीताः पानशून्याः क्षीबा मत्ताः कादम्बाः कलहंसा यत्र तथा असम्मृष्टं सम्मार्जनशून्यममलमम्बरमाकाशं यत्र एवमप्रसादितं वस्त्रगालनकतकक्षोदप्रक्षेपादिना यत्प्रसादनं तच्छून्यं सूक्ष्मं लघ्वम्बु यत्र । एवंभूतं जगम्मनोहरमासीदित्यन्वयः । परमार्थतस्तु शुद्धाम्भिवत्येव काव्यादर्शे दृष्टः पाठः ॥ विभाव्यमानेति । वर्ण्यमानेत्यर्थः ॥ वरेति । वरतनोः केशपाशरचनासम्पादकेनात एव सुरभिनखेन राज्ञो हस्तेनावचितकुसुमा लूनपुष्पाऽपि लता वृन्तासक्तभ्रमरा सञ्जातेत्यर्थः ॥ ७६ ॥

( चन्द्रा० )—हेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा मता ।
अस्त्रैरतीक्ष्णकठिनैर्जगज्जयति मन्मथः ॥ ७७ ॥

( कुव० )—अत्र जगज्जये साध्ये हेतूनामस्त्राणामसमग्रत्वतीक्ष्णत्वादिगुणवैकल्यम् ।

यथा वा—उद्यानमारुतोद्धूताश्चूतचम्पकरेणवः ।
उदस्रयन्ति पान्थानामस्पृशन्तो विलोचने ॥

अत्र बाष्पोद्गमनहेतूनामसमग्रत्वं स्पर्शनक्रियावैकल्यम् । इमां विशेषोक्तिरिति दण्डी व्याजहार । यतस्तत्र प्रथमोदाहरणे मन्मथस्य महिमातिशयरूपो द्वितीयोदाहरणे चम्पकरेणूनामुद्दीपकतातिशयरूपश्च विशेषः ख्याप्यत इति । अस्माभिस्तु तीक्ष्णत्वादिवैकल्यमपि कारणविशेषाभावरूपमिति विभावना प्रदर्शिता ॥ ७७ ॥

( अ०चं० )—हेतूनामिति ॥ असमग्रत्वे हेतुतावच्छेदकस्य धर्मस्य तत्सम्बन्धस्य वा वैकल्ये सति ॥ अस्त्रैरिति । धर्मवैकल्योदाहरणम् । सम्बन्धवैकल्ये उदाहरति—उद्यानेति ॥ विलोचने कर्मभूते उदस्रयन्ति उद्गताश्रूणि कुर्वन्तीत्यर्थः ॥ क्रियेति । धात्वर्थत्वाभिप्रायस्पर्शनस्य संयोगरूपत्वात् । इमां द्वितीयप्रकाररूपां विभावनाम् ॥ व्याजहारेति । गुणजातिक्रियादीनां यत्र वैकल्यदर्शनं विशेष्यदर्शनायैव सा विशेषोक्तिरिष्यत इति ग्रन्थेन व्यवहृतवानित्यर्थः । एतेन प्रथमप्रकाराद्द्विती-

यप्रकारस्य वैलक्षण्यं दुरुपपादमिति वदन्नपास्तः । वैलक्षण्याभावे हि प्राचामलङ्कारान्तरत्वेन कथनमत्यन्तानुपपन्नमेव स्यात् । अस्ति च स्वरूपतः कारणाभावकथनात्कारणगतधर्मवैकल्यद्वारेण तद्विशिष्टकारणाभावकथने सहृदयसिद्धो विच्छित्तिविशेषः । प्रकारान्तरास्वीकारे लाघवमिति तु स्वीयलाघवोद्भावनमिति कृतमधिकेन ॥ ७७ ॥

(चंद्रा०)-कार्योत्पत्तिस्तृतीया स्यात्सत्यपि प्रतिबन्धके।
नरेन्द्रानेव ते राजन्दशत्यसिभुजङ्गमः ॥ ७८ ॥

( कुव० )-अत्र नरेन्द्रा विषवैद्याः सर्पदंशप्रतिबन्धकमन्त्रौषधिशालिनः श्लेषेण गृहीता इति सत्येव प्रतिबन्धके कार्योत्पत्तिः ॥

यथा वा-चित्रं तपति राजेन्द्र प्रतापतपनस्तव ।
अनातपत्रमुत्सृज्य सातपत्रं द्विषद्गणम् ॥ ७८ ॥

( अ० चं० )-कार्योत्पत्तिरिति ॥ प्रतिबन्धके सत्यपि कार्योत्पत्तिकथनं तृतीया विभावना ॥ नरेन्द्रानिति । 'नरेन्द्रो वार्तिके राज्ञि विषवैद्येऽपि कथ्यते ।' इति विश्वः । असिः खड्ग एव भुजङ्गमः॥ चित्रमिति । प्रताप एव तपनः सूर्यः । आतपत्रं छत्रं तद्रहितमनातपत्रम्, आतपत्रेण सहितं सातपत्रम् ॥ ७८ ॥

(चं०)-अकारणात्कार्यजन्म चतुर्थी स्याद्विभावना ।
शङ्खाद्वीणानिनादोऽयमुदेति महदद्भुतम् ॥ ७९ ॥

( कुव० )-अत्र शंखशब्देन कमनीयः कामिनीकण्ठस्तन्त्रीनिनादत्वेन तद्गीतं चाध्यवसीयत इत्यकारणात्कार्यजन्म ।

यथा वा-तिलपुष्पात्समायाति वायुश्चन्दनसौरभः ।
इन्दीवरयुगाच्चित्रं निःसरन्ति शिलीमुखाः ॥७९॥

( अ०चं० )-अकारणादित्यस्य सुगमत्वान्न व्याख्यानम् ॥ ७९ ॥

(चन्द्रा०)-विरुद्धात्कार्यसम्पत्तिर्दृष्टा काचिद्विभावना।
शीतांशुकिरणास्तन्वीं हन्त सन्तापयन्ति ताम् ८०॥

( कुव० )-अत्र तापनिवर्तकतया तापविरुद्धैरिन्दुकिरणैस्तापजनिरुक्ता ॥

यथा वा-

उदिते कुमारसूर्ये कुवलयमुल्लसति भाति न क्षत्रम्।
मुकुलीभवन्ति चित्रं परराजकुमारपाणिपद्मानि ॥

यथा वा-अविवेकि कुचद्वन्द्वं हन्तु नाम जगत्रयम्।
श्रुतिप्रणयिनोरक्ष्णोरयुक्तं जनमारणम् ॥

पूर्वोदाहरणयोः कारणस्य कार्यविरोधित्वं स्वाभाविकम्। इह तु श्रुतिप्रणयित्वरूपागन्तुकगुणप्रयुक्तमिति भेदः ॥८०॥

(अ० चं०)-उदित इति ॥ कस्यचिद्राजकुमारस्य प्रतापवर्णनम्। कुमाररूपे सूर्ये उदिते सति कोः पृथिव्या वलयं मण्डलमेव कुवलयं कुमुदमुल्लासं प्राप्नोति। क्षत्रं क्षत्रियकुलं न भाति। अथ च नक्षत्रं भातीति चित्रम्। तथा परेषां राजकुमाराणां पाणिकमलानि मुकुलीभवन्ति सङ्कुचन्ति। अञ्जलिबन्धात्तदाकृतीनि भवन्तीत्यर्थः ॥ अविवेकीति। विवेको विशेषदर्शनं विश्लेषश्च तच्छून्यम्। परस्परं संश्लिष्टत्वात्। कुचयुगम्। कर्तृ। जगत्त्रयं हन्तु नाम। श्रुतिर्वेदः कर्णश्च। प्रणयः परिचयः ॥ ८० ॥

(चंद्रा०) कार्यात्कारणजन्माऽपि दृष्टा काचिद्विभावना।
यशः पयोराशिरभूत्करकल्पतरोस्तव ॥ ८१ ॥

(कुव०)-यथा वा-

जाता लता हि शैले जातु लतायां न जायते शैलः।
सम्प्रति तद्विपरीतं कनकलतायां गिरिद्वयं जातम् ॥८१॥

(अ० चं०)-यश इति ॥ कर एव दातृत्वात्कल्पतरुः। अत्र पयोधिजन्यात्कल्पतरोः कारणस्य पयोधेरुत्पत्तिः षष्ठी विभावना ॥ जातेति। जातु कदाचित् कनकलतेव कनकलता कामिनी। गिरिद्वयमिव स्तनद्वयम् ॥ ८१ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानंदटीकायां विभावनालङ्कारप्रकरणम् ॥ ३४ ॥

---

## विशेषोक्त्यलङ्कारः ३५.

(चन्द्रा०)-कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे।
हृदि स्नेहक्षयो नाभूत्स्मरदीपे ज्वलत्यपि ॥ ८२ ॥

( कुव० ) यथा वा–अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः ॥
अहो दैवगतिश्चित्रा तथापि न समागमः ॥ ८२ ॥

( अ०चं० )–विशेषोक्तिं लक्षयति–कार्याजनिरिति ॥ पुष्कले सहकारिसम्पन्ने कारणे सति प्रसिद्धकारणसमूहे सतीति यावत् । कार्यस्याजनिरनुत्पत्तिर्विशेषोक्तिः । विशेषस्यानुत्पत्तिनिमित्तस्योक्तिरवगतिर्यत्रेति व्युत्पत्तेः ॥ अनुरागेति । अनुरागो रक्तिमा रतिश्च । पुरःसरोग्रवर्ती आज्ञाकरश्च । पूर्वोदाहरणेऽनुक्तिनिमित्ता, इह दैवगतिवैचित्र्यस्य निमित्तस्योपादानादुक्तनिमित्तेति भेदः ॥ ८२ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां विशेषोक्त्यलङ्कारप्रकरणम् ॥ ३५ ॥

---

## असम्भवालङ्कारः ३६.

(चंद्रा०)–असम्भवोऽर्थनिष्पत्तेरसम्भाव्यत्ववर्णनम् ।
को वेद गोपशिशुकः शैलमुत्पाटयेदिति ॥ ८३ ॥

यथा वा–अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ॥ ८३ ॥

( अ०चं० )–असम्भव इति ॥ कस्यचित्पदार्थस्य निष्पत्तेरसंभावनीयत्ववर्णनमसम्भवो नामालङ्कारः । गोपशिशुको गोपालबालकः । निन्दायां स्वार्थे वा कप्रत्ययः । उत्पाटयेदुद्धरेत् ॥ अयमिति । वारां जलानां निलयः स्थानम् । तृष्णा पिपासा अर्थाभिलाषश्च । तरलितं चञ्चलीकृतम् । श्रित आश्रितः मुनिरगस्त्यः एनं समुद्रं क्षणात् आसमन्तात् पास्यति इदं को जानीत इत्यन्वयः । कीदृशम् । निजकरपुटी करसम्पुटमेव कोटरं बिलं तद्गतं तथा ताम्यन्तो ग्लायन्तस्तिमयो मत्स्या मकराश्च यस्यैवंभूतमित्यर्थः ॥ ८३ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायामसम्भवालङ्कारप्रकरणम् ३६॥

---

## असङ्गत्यलङ्कारः ३७.

(चन्द्रा०)-विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसङ्गतिः ।
विषं जलधरैः पीतं मूर्च्छिताः पथिकाङ्गनाः ॥८४॥

( कुव० )-ययोः कार्यहेत्वोर्भिन्नदेशत्वं विरुद्धं तयोस्तन्निबध्यमानमसङ्गत्यलङ्कारः । यथात्र विषपानमूर्च्छयोर्भिन्नदेशत्वम् ।

यथा वा-अहो खलभुजङ्गस्य विचित्रोऽयं वधक्रमः ।
अन्यस्य दशति श्रोत्रमन्यः प्राणैर्वियुज्यते ॥

क्वचिदसङ्गतिसमाधाननिबन्धनेन चारुतातिशयः ।

यथा वा-अजस्रमारोहसि दूरदीर्घां
सङ्कल्पसोपानततिं तदीयाम् ।
श्वासान्स वर्षत्यधिकं पुनर्य-
द्ध्यानात्तव त्वन्मयतामवाप्य ॥

विरुद्धमिति विशेषणाद्यत्र कार्यहेत्वोर्भिन्नदेशत्वं न विरुद्धं तत्र नासङ्गतिः ।

यथा-भ्रूचापवल्लीं सुमुखी यावन्नयति वक्रताम् ।
तावत्कटाक्षविशिखैर्भिद्यते हृदयं मम ॥ ८४ ॥

( अ०चं० )-विरुद्धमिति । अदृष्टमित्यर्थः । भिन्नदेशत्वं भिन्नाधिकरणत्वम् । विषं जलं हालाहलं च । सङ्गतस्य भावः साङ्गत्यं तदभावोऽसाङ्गत्यम् ॥ अजस्रमिति । दमयन्तीं प्रति हंसोक्तिः । हे दमयन्ति ! त्वं तदीयां नलसम्बन्धिनीं दूरमत्यन्तं दीर्घां संकल्पो मनोरथस्तद्रूपसोपानपरम्परामजस्रं निरन्तरमारोहसि । स पुनर्नलो अधिकं श्वासान् वर्षति मुञ्चतीति यत्तव ध्यानात्त्वन्मयतां त्वत्स्वरूपतामवाप्येत्यन्वयः । अत्र चतुर्थपादेनासङ्गतिसमाधानम् ॥ भ्रूचापेति । भ्रूचापवल्लीं भ्रूस्वरूपधनुर्लताम् । यावदिति परिमाणार्थम् । वक्रतां नयति आकर्षतीति यावत् । तावत्परिमाणम् । हृदयं भिद्यत इत्यर्थः । अत्र हृदयभेदधनुराकर्षणयोः कार्यकारणयोर्भिन्नदेशत्वमेव दृष्टमिति नासङ्गतिरलङ्कारः ॥ ८४ ॥

(चन्द्रा०)अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च सा।
अन्यत्कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिस्तथा ॥ ८५ ॥
अपारिजातां वसुधां चिकीर्षन्द्यां तथाऽकृथाः ।
गोत्रोद्धारप्रवृत्तोऽपि गोत्रोद्भेदं पुराऽकरोः ॥ ८६ ॥

(कुव०)–अत्र कृष्णं प्रति शक्रस्य सोपालम्भवचने भुवि चिकीर्षिततया तत्र करणीयमपारिजातत्वं दिवि कृतमित्येकासङ्गतिः। पुरा गोत्राया उद्धारे प्रवृत्तेन वराहरूपिणा तद्विरुद्धं गोत्राणां दलनं खुरकुट्टनैः कृतमिति द्विविधाऽपि श्लेषोत्थापिता ।

यथा वा–त्वत्खड्गखण्डितसपत्नविलासिनीनां
भूषा भवन्त्यभिनवा भुवनैकवीर ।
नेत्रेषु कङ्कणमथोरुषु पत्रवल्ली
चोलेन्द्रसिंह तिलकं करपल्लवेषु ॥
मोहं जगत्त्रयभुवामपनेतुमेत-
दादाय रूपमखिलेश्वर देहभाजाम् ।
निःसीमकान्तिरसनीरधिनामुनैव
मोहं प्रवर्द्धयसि मुग्धविलासिनीनाम् ॥

अत्राद्योदाहरणे कङ्कणादीनामन्यत्र कर्तव्यत्वं प्रसिद्धमिति नोपन्यस्तम् । भवतिना भावनारूपा अन्यत्र कृतिराक्षिप्यत इति लक्षणानुगतिः ॥ ८५ ॥ ८६ ॥

( अ०चं० )–अन्यत्रेति । अन्यत्र कर्तव्यस्य वस्तुनस्ततोऽन्यस्मिन्नधिकरणे या कृतिः करणं तदप्यसङ्गतिरित्यनुषज्यते । तथा अन्यत्कार्यं कर्तुं प्रवृत्तस्य तद्विरुद्धकार्यकरणं तृतीया असङ्गतिः । अपगतमरिजातं यस्यास्तां द्यां स्वर्गम् । तथा पारिजाततरुरहितामकृथाः कृतवान् । एवं गोत्रायाः पृथिव्या उद्धाराय पुरा वराहावतारे प्रवृत्तोपि त्वं गोत्राणां पर्वतानामुद्भेदं दलनमकरोः कृतवानित्यर्थः । श्लेषोत्थापिता श्लेषमूलकाभेदाध्यवसायोत्थापिता ॥ यथा वेति । त्वत्खड्गेति । हे भुवनैकवीर चोलदेशाधिप सिंहसदृश तव खड्गेन खण्डिता ये सपत्नाः

शत्रवस्तद्विलासिनीनामभिनवा अदृष्टपूर्वा भूषा भूषणानि भवन्ति। यथा नेत्रेषु कङ्कणं वलयं भवतीत्यनुषङ्गः । अथेति समुच्चये। ऊरुषु च पत्रयुक्ता वल्ली सैव पत्रिकारचना। करपल्लवेषु तिलयुक्तं कं जलमेव ललाटभूषणमिति॥ मोहमिति। हे अखिलेश्वर जगत्त्रयवर्तिनां देहधारिणां मोहमपनेतुमेतद्रूपं कृष्णशरीरमादाय मर्यादातिक्रान्तकान्तिरूपरससमुद्रेणामुनैव रूपेण सुन्दरस्त्रीणां मोहं प्रवर्द्धयसीत्यन्वयः॥ अत्रेति। अनयोर्मध्य इत्यर्थः। आद्योदाहरणे इति लक्षणानुगतिरित्यन्वयः। भवतिना भवत्यर्थेन भवनेनेति यावत्। भावनारूपा भवनप्रयोजकव्यापाररूपा। यत्तु–अन्यत्र करणीयस्येत्याद्यसङ्गतिप्रकारद्वयान्तरकथनमयुक्तम्। अपारिजातामित्युदाहरणे पारिजाताराहित्यचिकीर्षारूपकारणस्य कार्येण पारिजाताराहित्येन वैयधिकरण्योपनिबन्धनेन प्राथमिकासङ्गतितो वैलक्षण्यानुपपत्तेः। आलम्बनाख्यविषयतासम्बन्धनचिकीर्षायाः सामानाधिकरण्येन कार्यमात्रं प्रति हेतुत्वात्। एवं नेत्रेषु कङ्कणमित्यादौ कङ्कणत्वनेत्रालङ्कारत्वयोर्विरुद्धयोः सामानाधिकरण्यवर्णनाद्विरोधाभासत्वमुचितम्। एवं गोत्रोद्धारप्रवृत्तोऽपीत्युदाहरणे विरुद्धात्कार्यसम्पत्तिर्दृष्टा काचिद्विभावनेत्युक्तविभावनाप्रकारेणैव गतार्थत्वादसङ्गतिभेदान्तरकल्पनानुचिता। मोहमित्यादावपि मोहनिवर्तकत्वमोहजनकत्वयोर्विरुद्धयोरेकत्र वर्णनाद्विरोधाभास एवेति कैश्चिदुक्तं, तदसङ्गतम्–उक्तसम्बन्धेन चिकीर्षाया हेतुत्वासिद्धेः। न हि यदधिकरणे कार्यचिकीर्षा तदधिकरणमन्तर्भाव्योक्तसम्बन्धेन चिकीर्षायाः कार्यहेतुत्वं तान्त्रिकसम्मतं युक्तं वा। अन्यत्र चिकीर्षितस्यापि प्रमादादिनान्यत्र करणेन व्यभिचारात्। अत एवैवंविधवैयधिकरण्यस्य विरुद्धत्वादपि न प्राथमिकासङ्गत्यन्तर्भावसम्भवः। वस्तुतस्तु "विषं जलधरैः पीतं मूर्च्छिताः पथिकाङ्गनाः" इत्यत्रैव नात्र कार्यकारणवैयधिकरण्यप्रयुक्तो विच्छित्तिविशेषोऽपि त्वन्यत्र कर्तव्यस्यान्यत्र करणप्रयुक्त एवेति सहृदयमेव प्रष्टव्यम्। एवं नेत्रेषु कङ्कणमित्यत्र सत्यपि विरोधाभासेऽन्यत्र चमत्कारित्वेन क्लृप्तालङ्कारभावाऽन्यत्र करणरूपासङ्गतिरपि प्रतीयमाना न शक्या निराकर्तुम्। एवं गोत्रोद्धारप्रवृत्तोऽपीत्युदाहरणे गोत्रोद्धारविषयकप्रवृत्तेर्गोत्रोद्भेदरूपकार्यविरुद्धत्वाद्विरुद्धा कार्यसम्पत्तिरपि विभावनेत्यपि न युक्तम्। गोत्रोद्धारप्रवृत्तेर्गोत्रोद्भेदनिवर्तकत्वाभावेन तद्विरुद्धत्वाभावात्। कथञ्चित्तदभ्युपगमेऽप्यन्यत्कार्यं कर्तुं प्रवृत्तेन तद्विरुद्धकार्यान्तरकरणरूपासङ्गतिरपि मोहं जगत्त्रयभुवामित्यादौ चमत्कारित्वेन लब्धात्मिका न निवारयितुं शक्यते। न चात्रापि मोहनिवर्तकान्मोहोत्पत्तेः सैव वि-

भावनेति वाच्यम्, मोहनिवर्तकस्य सिद्धवदप्रतीतेः । अत एव न विरोधाभासोऽपि विशेषोक्तिकथनं तत्रासङ्गतमेव । न हि गोत्रोद्धारविषयकप्रवृत्तिरूपकारणसत्त्वेऽपि गोत्रोद्धाररूपस्य कार्यस्यानुत्पत्तिरिह प्रतिपाद्यते । किन्तु विरुद्धकार्योत्पत्तिरेवेति विभावनीयम् ॥ ८५ ॥ ८६ ॥

इत्यलंकारचन्द्रिकायां कुवलयानन्दटीकायामसङ्गत्यलङ्कारप्रकरणम् ॥ ३७ ॥

---

## विषमालङ्कारः ३८.

( चन्द्रा० )-विषमं वर्ण्यते यत्र घटना ननु रूपयोः ।
क्वेयं शिरीषमृद्वङ्गी क्व तावन्मदनज्वरः ॥ ८७ ॥

( कुवल० )-अत्रापि मृदुत्वेनातिदुःसहत्वेन चाननुरूपयोरङ्गनामदनज्वरयोर्घटना ।

यथा वा-अभिलषसि यदीन्दो वक्त्रलक्ष्मीं मृगाक्ष्याः
पुनरपि सकृदब्धौ मज्ज संक्षालयाङ्कम् ।
सुविमलमथ बिम्बं पारिजातप्रसूनैः
सुरभय वद नो चेत्त्वं क्व तस्या मुखं क्व ॥

पूर्वत्र वस्तुसती घटना अत्र च चन्द्रवदनलक्ष्म्योस्तर्किता घटनेति भेदः ॥ ८७ ॥

( अ०चं०)-विषममिति ॥ परस्परमानुरूप्यरहितयोः पदार्थयोर्यत्र घटनासम्बन्धो वर्ण्यते तत्र विषमनामालङ्कारः । सम्बन्धश्च संयोगादिः । उत्पाद्योत्पादकभावश्चेति सर्वप्रकारसाधारणमेतल्लक्षणं बोध्यम् ॥ अभिलषसीति । अङ्कं कलङ्कं संक्षालय प्रक्षालय । अथ प्रक्षालनानन्तरम् । नो चेत्तस्या मुखं क्व त्वं क्व इति वदेत्यन्वयः । वस्तुसती वस्तुगत्या विद्यमाना ॥ चन्द्रेति । चन्द्रश्च वदनलक्ष्मीश्च तयोरित्यर्थः ॥ ८७ ॥

( चं० )-विरूपकार्यस्योत्पत्तिरपरं विषमं मतम् ।
कीर्तिं प्रसूते धवलां श्यामा तव कृपाणिका ॥८८॥

( कुवल० )-अत्र कारणगुणप्रक्रमेण विरुद्धाच्छयामाद्धवलोत्पत्तिः। कार्यकारणयोर्निर्वर्त्यनिर्वर्तकत्वे पञ्चमी विभावना। विलक्षणगुणशालित्वे त्वयं विषम इति भेदः ॥ ८८ ॥

(अ०चं०)-विरूपकार्यस्येति ॥ कारणविलक्षणस्वरूपस्येत्यर्थः। कृपाणिका खड्गः। प्रक्रमेणेति। प्रक्रमः परिपाटी। स्वजातीयकार्यगुणोत्पादकत्वरूपा विरूपा विरुद्धा कार्यसम्पत्तिरिति पञ्चमविभावनाप्रकारेणाभेदमाशंक्याह-कार्येति ॥ अयं विषम उक्तविषमालङ्कारप्रभेदः ॥ ८८ ॥

( चं० )--अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात्।
भक्ष्याशयाहिमञ्जूषां दृष्ट्वाखुस्तेन भक्षितः ॥८९॥

( कुव० )-इष्टार्थमुद्दिश्य किञ्चित्कर्मारब्धवतो न केवलमिष्टस्यानवाप्तिः किं तु ततोऽनिष्टस्यापि प्रतिलम्भश्चेत्तदपि विषमम्। यथा भक्ष्यप्रेप्सया सर्पपेटिकां दृष्ट्वा प्रविष्टस्य मूषकस्य न केवलं भक्ष्यालाभः किं तु स्वरूपहानिरपीति।

यथा वा-गोपाल इति कृष्ण त्वं प्रचुरक्षीरवाञ्छया।
श्रितो मातृस्तनक्षीरमप्यलभ्यं त्वया कृतम् ॥

इदमर्थावाप्तिरूपेष्टार्थसमुद्यमादिष्टानवाप्तावनिष्टप्रतिलम्भे चोदाहरणम्।

( अ०चं० )-तृतीयप्रकारमाह-अनिष्टस्यापीति ॥ अपिर्भिन्नक्रमः। इष्टार्थसमुद्यमादनिष्टस्यावाप्तिरपि च तद्विषममित्यर्थः। अपिना इष्टानवाप्तिः सङ्गृह्यते। चकारः पूर्वोक्तविषमसमुच्चयार्थः ॥ भक्ष्येति। अहिमञ्जूषां सर्पपेटिकां दृष्ट्वा भक्ष्यस्याशया प्रविष्ट आखुर्मूषकस्तेनाहिना भक्षित इत्यन्वयः। यत्तु प्रविष्ट इत्यस्यागम्यमानत्वान्न्यूनपदत्वमिति केनचिदुक्तं तदभिनिवेशदुष्टस्वहृदयानुभवविकत्थनमित्युपेक्षणीयम्। अनिष्टस्याऽपि प्रतिलम्भ इत्यत्राप्यपिर्भिन्नक्रमो बोध्यः ॥ गोपाल इति। हे कृष्ण त्वं गोपाल इति हेतोर्बहुदुग्धवांछया श्रित आश्रितः त्वया तु मातृस्तनदुग्धमपि अलभ्यं कृतम्। मुक्तिदानेनेति भावः। पूर्व-

त्रेष्टानवाप्तिरर्थगम्या इह त्वपिशब्दगम्येति विशेषः ॥ इदमिति । उदाहरणमिति च जातावेकवचनम् ॥

( कुवल० )-अनर्थपरिहारार्थरूपेष्टार्थसमुद्यमात्तदुभयम् ।
यथा-दिवि श्रितवतश्चन्द्रं सैंहिकेयभयाद्भुवि ।
शशस्य पश्य तन्वङ्गि साश्रयस्य ततो भयम् ॥

अत्र न केवलं शशस्य स्वानर्थपरिहारानवाप्तिः किंतु साश्रयस्याप्यनर्थावाप्तिरिति दर्शितम् । परानिष्टप्रापणरूपेष्टार्थसमुद्यमात्तदुभयम् ।

यथा-दिधक्षन्मारुतेर्वालं तमादीप्यद्दशाननः ।
आत्मीयस्य पुरस्यैव सद्यो दहनमन्वभूत् ॥

पुरस्यैवेत्येवकारेण परानिष्टप्रापणाभावो दर्शितः । अनिष्टस्याप्यवाप्तिश्चेति श्लोकेऽनिष्टावाप्तेरपि शब्दसंगृहीताया इष्टानवाप्तेश्च प्रत्येकमपि विषमपदेनान्वयः । ततश्च केवलानिष्टप्रतिलम्भः केवलेष्टानवाप्तिश्चेत्यन्यदपि विषमद्वयं लक्षितं भवति ॥

( अ०चं० )-दिवीति ॥ भुवि सैंहिकेयस्य सिंहीपुत्रस्य सिंहस्य भयात् दिवि आकाशे चन्द्रमाश्रितवतः शशस्य साश्रयस्याश्रयसहितस्य ततः सैंहिकेयाद्राहोर्भयमेतत्, हे तन्वङ्गि पश्येत्यन्वयः ॥ परेति । परस्यानिष्टावाप्तिरूपो य इष्टार्थ इत्यर्थः । तदुभयमिष्टानवाप्त्यनिष्टावाप्तिद्वयम् । दिधक्षन्निति । दशाननो रावणः मारुतेर्हनुमतो वालं पुच्छं दग्धुमिच्छंस्तं वालमादीप्यद्दीपयति स्मेत्यर्थः ॥ प्रत्येकमपीति । अपिना इष्टानवाप्तिसमुच्चिताया अनिष्टावाप्तेर्विषमपदेनान्वयः समुच्चीयते । विषमपदेन विषमपरामर्शकेन तत्पदेन । तथा च तात्पर्यबलाद्वाक्यमावर्तनीयमिति भावः । यत्त्वनिष्टस्यैव तदुत्तरापिशब्दसमुच्चिताया इष्टानवाप्तेरप्याप्नोति नैवान्वयो न तु तत्पदपरामृष्टेन विषमेणाव्युत्पत्तेरिति तत्प्रागेवापिशब्दान्वयव्याख्यानेन निरस्तं वेदितव्यम् ॥

( कुवल० )-तत्र केवलानिष्टप्रतिलम्भो यथा-
पद्मातपत्ररसिके सरसीरुहस्य
किं बीजमर्पयितुमिच्छसि वापिकायाम् ।

काल: कलिर्जगदिदं न कृतज्ञमज्ञे
स्थित्वा हरिष्यति मुखस्य तवैव लक्ष्मीम् ॥

अत्र पद्मातपत्रलिप्सया पद्मबीजावापं कृतवत्यास्तल्लाभोऽस्त्येव किन्तु मुखशोभाहरणरूपोत्कटानिष्टप्रतिलम्भः । केवलेष्टानवाप्तिर्यथा--

खिन्नोऽसि मुञ्च शैलं बिभृमो वयमिति वदत्सु शिथिलभुजः ।
भरभुग्नविततबाहुषु गोपेषु हसन्हरिर्जयति ।

अत्र यद्यपि शैलस्योपरितनरूपानिष्टावाप्तिरपि प्रसक्ता तथापि भगवत्कराम्बुजसंसर्गमहिम्ना सा न जातेति शैलधारणरूपेष्टानवाप्तिमात्रम् ।

यथा वा--लोके कलङ्कमपहातुमयं मृगाङ्को
जातो मुखं तव पुनस्तिलकच्छलेन ।
तत्रापि कल्पयसि तन्वि कलङ्करेखां
नार्यः समाश्रितजनं हि कलङ्कयन्ति ॥

अत्रानिष्टपरिहाररूपेष्टानवाप्तिः ।

( अ०चं० )-पद्मेति ॥ दयितां प्रति नायकोक्तिः । पद्मस्यातपत्रं छत्रं तत्र रसिके हे तन्वि वापिकायां सरसीरुहस्य पद्मस्य कन्दमर्पयितुं किमितीच्छसि यतः हे अज्ञे कलियुगरूपः कालः इदं जगत्कृतज्ञं च न भवति । ततः किं तत्राह । इदं सरसीरुहं स्थित्वा तवैव मुखस्य लक्ष्मीं हरिष्यति न त्वन्यस्या इत्यर्थः ॥ खिन्नोऽसीति । बिभृमो धारयामः । वदत्सु गोपेषु शिथिलौ भुजौ यस्य सः भरेण शैलभारेण भुग्ना वक्राः वितता विस्तीर्णा बाहवो येषां तथाभूतेषु सत्सु हसन् ॥ अत्रेति । न च भरभुग्नेत्यनेन बाहुगतास्थिसन्धिभङ्गरूपानिष्टप्राप्तेः साक्षादुपात्तत्वात्सर्वाङ्गचूर्णीभावगर्वापहाररूपायाश्च स्फुटं गम्यमानत्वात् कथमिष्टाप्राप्तिमात्रमित्युच्यत इति वाच्यम् । अस्थिसन्धिभङ्गस्याशब्दार्थत्वाद्भगवद्भुजशैथिल्यप्रयुक्तभाराधिक्येन वक्रतापात्रस्य शब्दोपात्तस्य च क्लेशविशेषानाधायकत्वेनानिष्टव्यपदेशानर्हत्वात्, सुहृद्भूतानां गोपानामनिष्टप्राप्तौ हास्यानुपपत्तेश्च । अत एव न सर्वाङ्गचूर्णीभावोऽपि गम्यः । गर्वप्रसक्त्यभावाच्च न तदपहारोऽपि । यतश्चिरकालशैलधारणजन्यश्रमपरिजिहीर्षया गोपानां प्रवृत्तिरिहावगम्यत इति निरव-

यम् ॥ लोक इति । हे तन्वि लोके प्रसिद्धं कलङ्कमपहातुं निवारयितुं मृगाङ्कस्तव मुखं जातस्तत्रापि पुनस्तिलकव्याजेन कलङ्करेखां त्वं कल्पयसि करोषि हि यस्मान्नार्यः समाश्रितजनं स्वाश्रितजनं कलङ्किनं कुर्वन्तीत्यन्वयः ॥

( कुव० )-यथा वा-शापोऽप्यदृष्टतनयाननपद्मशोभे
सानुग्रहो भगवता मयि पातितोऽयम् ।
कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो
बीजप्ररोहजननीं दहनः करोति ॥

अत्र परानिष्टप्रापणरूपेष्टानवाप्तिः। स्वतोऽनिष्टस्यापि मुनिशापस्य महापुरुषार्थपुत्रलाभावश्यम्भावगर्भतया दशरथेनेष्टत्वेन समर्थितत्वात् । यत्र केनचित्स्वेष्टसिद्ध्यर्थं नियुक्तेनान्येन नियोक्तुरिष्टमुपेक्ष्य स्वस्यैवेष्टं साध्यते तत्रापीष्टानवाप्तिरूपमेव विषमम् ।

यथा-यं प्रति प्रेषिता दूती तस्मिन्नेव लयं गता ।
सख्यः पश्यत मौढ्यं मे विपाकं वा विधेरमुम् ॥

तस्मिन्नेव लयं गतेति नायके दूत्याः स्वाच्छन्द्यं दर्शितम् ।

यथा वा-नपुंसकमिति ज्ञात्वा प्रियायै प्रेषितं मनः ।
तत्तु तत्रैव रमते हताः पाणिनिना वयम् ॥

एतानि सर्वथैवेष्टानवाप्तेरुदाहरणानि । कदाचिदिष्टावाप्तिपूर्वकं तदनवाप्तिर्यथा मदीये वरदराजस्तवे-

भानुर्निशासु भवदङ्घ्रिमयूखशोभा-
लोभात्प्रताप्य किरणोत्करमाप्रभातम् ।
तत्रोद्धृते हुतवहात्क्षणलुप्तरागे
तापं भजत्यनुदिनं स हि मन्दतापः ॥

( अ० चं० )-शापोऽपीति । मृगयायां प्रमादतो हतपुत्रेण तापसेन त्वमपि पुत्रशोकान्मरिष्यसीति शापे दत्ते तं प्रति दशरथस्येयमुक्तिः । अदृष्टपुत्रमुखपंकजशोभे मयि भगवता त्वया पातितोऽयं शापोऽपि सानुग्रहो भवति । खलु निश्चितम् । इन्धनैरिद्धो दीप्तो दहनः कृषियोग्यां क्षितिं दहन्नपि बीजांकुरजननीं करोतीति दृष्टान्तः ॥ परेति । परस्य दशरथ-

स्यानिष्टप्रापणरूपं यदिष्टं तस्यानवाप्तिरर्थात्तापसस्येत्यर्थः । कुतस्तत्रा-ह-स्वत इति ॥ नियोक्तुः प्रेषयितुः ॥ यं प्रतीति । मौढ्यम् मूढत्वम् । एवंविधायामाप्तत्वबुद्धेर्विधेर्दैवस्य विपाकं परिपाकम्फलमिति यावत् ॥ भानुरिति । हे हरे भानुः सूर्यो भवच्चरणकिरणशोभाया लोभात्स्वीय-किरणसमूहं निशासु प्रभातपर्यन्तम्प्रताप्य रात्रौ सूर्यकिरणानामग्नौ प्रवेशात्तापयित्वा तत्र तस्मिन्किरणोत्करे हुतवहादग्नेः सकाशादुद्धृते सति रक्ततादर्शनान्मन्दसन्तापः सन् क्षणमात्रेण लुप्तरागे नष्टलौहित्ये सत्यनुदिनं तापम्भजतीत्यन्वयः ॥

( कुव० )--यथा वा--त्वद्वक्त्रसाम्यमयमम्बुजकोशमुद्रा-
भङ्गात्ततत्सुषुममित्रकरोपक्लृप्त्या ।
लब्ध्वाऽपि पर्वाणि विधुः क्रमहीयमानः
शंसत्यनीत्युपचितां श्रियमाशुनाशाम् ॥

अत्राद्यश्लोके सूर्यकिरणानां रात्रिष्वग्निप्रवेशनमागम-सिद्धम् । सूर्यस्य निजकिरणेषु भगवच्चरणारुणिमप्रेप्स-या तत्कृतं तेषामग्नौ प्रतापनं परिकल्प्य तेषामुदयकाल-दृश्यमरुणिमानं च ततोद्धृतनाराचानामिवाग्निसन्तापन-प्रयुक्तारुणिमानुवृत्तिं परिकल्प्य सूर्यस्य महताऽपि प्रयत्नेन तात्कालिकेष्टावाप्तिरेव जायते न सार्वकालिकेष्टावाप्ति-रिति दर्शितम् । द्वितीयश्लोके चन्द्रस्य भगवन्मुखलक्ष्मीं लिप्समानस्य सुहृत्त्वेन मित्रशब्दश्लेषवशात्सूर्यं परिकल्प्य तत्किरणस्य कमलमुकुलविकासनं चन्द्रानुप्रवेशनं च सुहृत्पाणेर्भगवन्मुखलक्ष्मीनिधानकोशगृहमुद्रामोचनपूर्वकं ततो गृहीतभगवन्मुखलक्ष्मीकस्य तया भगवन्मुखल-क्ष्म्या चन्द्रप्रसाधनार्थं चन्द्रस्पर्शरूपं च परिकल्प्यैतावता-पि प्रयत्नेन पौर्णमास्यामेव भगवन्मुखसाम्यरूपेष्टप्राप्ति-र्जायते न सार्वकालिकीति दर्शितम् । क्वचिदिष्टानवाप्ताव-पि तदवाप्तिभ्रमनिबन्धनविच्छित्तिविशेषः ।

यथा वा-

बल्लालक्षोणिपाल त्वदहितनगरे सञ्चरन्ती किराती
रत्नान्यादाय कीर्णान्युरुतरखदिराङ्गारशङ्काकुलाङ्गी ।

क्षिप्त्वा श्रीखण्डखण्डं तदुपरि मुकुलीभूतनेत्रा धमन्ती
श्वासामोदप्रसक्तैर्मधुकरपटलैर्धूमशङ्कां करोति ॥

अत्र प्रभूताग्निसन्तापनोद्योगात्तत्सम्पादनलाभेऽपि तल्लाभो भ्रमोपन्यासमुखेन निबद्धः ॥ ८९ ॥

( अ०चं० )–त्वद्वक्त्रेति ॥ हे हरे अयं विधुः पर्वणि पूर्णिमायामम्बुजस्य कोशः कुड्मलः स एवाम्बुजरूपभाण्डारगृहं तस्य मुद्रा मुकुलीभावो मुद्रणं च तस्य भङ्गेनात्ता गृहीता तत्सुषमा तच्छोभा यैस्तादृशा ये मित्रकराः सूर्यकिरणाः सुहृत्पाणयश्च तेषामुपक्लृप्त्या लाभेन त्वद्वक्त्रस्य कान्तिं लब्ध्वापि क्रमेण हीयमानः क्षीयमाणः सन् अनीत्या उपचितां प्रवृद्धां श्रियमाशु नाशो यस्यास्तां शंसति कथयतीत्यन्वयः ॥ अत्रेति । आगमसिद्धं तस्माद्दिवाग्निरादित्यं प्रविशति रात्रावादित्यस्तमिति श्रुतिसिद्धं प्रवेशनं तत्कृतं सूर्यकृतं तेषां किरणानामग्नौ प्रतापनरूपं परिकल्प्य उत्प्रेक्ष्य एवं तेषां किरणानामरुणिमानमारक्तत्वं च अरुणिमानुवृत्तिरूपं परिकल्प्य इति दर्शितमित्यन्वयः । एवमग्रेऽपि सुहृत्त्वेन सूर्यं परिकल्प्य तत्किरणचन्द्रानुप्रवेशं च शास्त्रसिद्धं सुहृत्पाणेर्यथोक्तविशेषणविशिष्टस्य चन्द्रस्पर्शरूपं च परिकल्प्य इति दर्शितमित्यन्वयः ॥ बल्लालेति । हे एतन्नामकभूपाल त्वच्छत्रुनगरे सञ्चरन्ती भिल्ली प्रकीर्णानि रत्नान्यादाय उरुतरा महती या खदिराङ्गारस्य शङ्का भ्रान्तिस्तया व्याकुलांगी तदुपरि श्रीखण्डकाष्ठशकलं क्षिप्त्वा मुकुलीभूतनेत्रा फूत्कारं कुर्वती सती श्वासपरिमलेन प्रसक्तैरागतैर्भ्रमरसमूहैर्धूमशङ्कां करोतीत्यन्वयः ॥ प्रभूतेति । बहुलेत्यर्थः । एतेषु च सर्वेषूत्पाद्योत्पादकभावरूपसम्बन्धगर्भेषु प्रभेदेषु कार्यकारणयोः क्वचिद्विलक्षणगुणशालित्वेनानुरूप्याभावात्क्वचिच्चेष्टोत्पादकत्वेनाभिमतस्य कारणस्येष्टानवाप्त्यनिष्टावाप्तिरूपकार्येणानुरूप्याभावात्सामान्यलक्षणसमन्वयो बोध्यः ॥ ८९ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां विषमालङ्कारप्रकरणम् ॥ ३८ ॥

---

## समालङ्कारः ३९.

(चंद्रा०)–समं स्याद्वर्णनं यत्र द्वयोरप्यनुरूपयोः ।
स्वानुरूपं कृतं सद्म हारेण कुचमण्डलम् ॥ ९० ॥

( कुव० )-प्रथमविषमप्रतिद्वन्द्वीदं समम् । यथा वा-

कौमुदीव तुहिनांशुमण्डलं
जाह्नवीव शशिखण्डमण्डनम् ।
पश्य कीर्तिरनुरूपमाश्रिता
त्वां विभाति नरसिंह भूपते ॥

चित्रंचित्रं बतबत महच्चित्रमेतद्विचित्रं
जातो दैवादुचितघटनासंविधाता विधाता ।
यन्निंबानां परिणतफलस्फीतिरास्वादनीया
यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥

पूर्वं स्तुतिपर्यवसायीदं निन्दापर्यवसायीति भेदः ॥९०॥

( अ०चं )-सममिति ॥ अनुरूपयोरित्यनन्तरसम्बन्धस्येति शेषः । परस्परमनुरूपयोः सम्बन्धस्य वर्णनं समं नामालङ्कारः । सद्म स्थानम् । शशिखण्डमण्डनं चन्द्रकलाभूषणं हरम् ॥ चित्रमिति । अत्र चित्रबतशब्दयोर्वीप्सा विषयातिशयद्योतनाय । परिणतं पक्वम् । स्फीतिः समृद्धिः । एतस्याः फलसमृद्धेः । कवलनकला भक्षणचातुर्यं तत्र कोविदः पण्डितः ॥ ९० ॥

(चंद्रा०)-सारूप्यमपि कार्यस्य कारणेन समं विदुः ।
नीचप्रवणता लक्ष्मीर्जलजायास्तवोचिता ॥९१॥

( कुव० )-इदं द्वितीयं विषमप्रतिद्वन्द्वि समम् ।

यथा वा-दवदहनादुत्पन्नो धूमो घनतामवाप्य वर्षैस्तम् ।
यच्छमयति तद्युक्तं सोऽपि च दवमेव निर्दहति ॥

यथा वा-आदौ हालाहलहुतभुजा दत्तहस्तावलम्बो
बाल्ये शम्भोर्निटिलमहसा बद्धमैत्रीनिरूढः ।
प्रौढो राहोरपि मुखविषेणान्तरङ्गीकृतो यः
सोयं चन्द्रस्तपति किरणैर्मामिति प्राप्तमेतत् ॥

पूर्वत्र कारणस्वभावानुरूप्यं कार्यस्यात्रागन्तुकतदीयदुष्टसंसर्गानुरूप्यमिति भेदः ॥ ९१ ॥

( अ०चं० )–सारूप्यमपीति ॥ कार्यस्य कारणेन सारूप्यमपि समालङ्कारः ॥ नीचेति । नीचप्रवणता नीचासक्तता जलजायाः समुद्ररूपजलाज्जातायाः ॥ उचितेति । जलस्य तादृशत्वादिति भावः ॥ दवेति । घनतां मेघरूपतां वर्षैर्जलवर्षणैः शमयति नाशयति । हि यस्मात्सोऽपि दवदहनोऽपि दवमेव स्वोत्पादकं विनिर्दहति । तथा च कारणस्य स्वोत्पादकनाशकत्वात्कार्यस्यापि धूमस्य तथात्वमुचितमित्यर्थः ॥ आदाविति । विरहिण्या इयमुक्तिः । सोयं चन्द्रो मां किरणैस्तपतीत्येतत्प्राप्तं न्यायप्राप्तमित्यर्थः । स कः य आदौ हालाहलरूपेण हुतभुजाऽग्निना दत्तो हस्तावलम्बो यस्य सः । निटिलं ललाटं तत्सम्बन्धिमहसा नेत्राग्निना बद्धया सम्बद्धया मैत्र्या निरूढः प्रसिद्धः प्रौढो युवा राहोर्मुखसम्बन्धिभिर्विषैरन्तरङ्गीकृतः ग्रहणकाले सम्पर्कातिशयादन्तरङ्गतां प्रापित इत्यर्थः । अत्र कार्यस्य तापस्य कारणीभूतचन्द्रगतदुष्टसंसर्गानुरूपत्वम् ॥ ९१ ॥

(चन्द्रा०)-विनानिष्टं च तत्सिद्धिर्यदर्थं कर्तुमुद्यतः ।
युक्तो वारणलाभोऽयं स्यान्न ते वारणार्थिनः ॥९२॥

( कुव० )–इदं सममनिष्टस्याप्यवाप्तिश्चेत्यर्थसंगृहीतस्य त्रिविधस्यापि विषमस्य प्रतिद्वन्द्वि । इष्टावाप्तेरनिष्टस्याप्रसङ्गाच्च । अत्र गजार्थितया राजानमुपसर्पन्तं तद्दौवारिकैर्वार्यमाणं प्रति नर्मवचनमुदाहरणम् । न चात्र निवारणमनिष्टमापन्नमित्युदाहरणत्वं शङ्कनीयम् । राजद्वारि क्षणनिवारणं सम्भावितमिति तदङ्गीकृत्य प्रवृत्तस्य विषमालङ्कारोदाहरणेष्विवातर्कितोत्कटाऽनिष्टापत्त्यभावात् । किञ्च यत्रातर्कितोत्कटानिष्टसत्त्वे श्लेषमहिम्ना इष्टार्थत्वप्रतिपत्तिस्तत्रापि समालङ्कारोऽप्रतिहत एव ।

उच्चैर्गजैरटनमर्थयमान एव
त्वामाश्रयन्निह चिरादुषितोऽस्मि राजन् ।
उच्चाटनं त्वमपि लम्भयसे तदेव
मामद्य नैव विफला महतां हि सेवा ॥

अत्र यद्यपि व्याजस्तुतौ स्तुत्या निन्दाभिव्यक्तिविव-

क्षायां विषमालङ्कारस्तथाऽपि प्राथमिकस्तुतिरूपवाच्यविवक्षायां समालङ्कारो न निवार्यते । एवं यत्रेष्टार्थावाप्तिसत्त्वेऽपि श्लेषवशादसतोऽनिष्टार्थस्य प्रतीतिस्तत्रापि समालङ्कारस्य न क्षतिः ।

यथा—शस्त्रं न खलु कर्तव्यमिति पित्रा नियोजितः ।
तदेव शस्त्रं कृतवान्पितुराज्ञा न लङ्घिता ॥

अत्र पितुराज्ञा लङ्घितेत्यनेन विरोधालङ्काराभिव्यक्त्यर्थं न खल्वित्यत्र पदद्वयविभागात्मकरूपान्तरस्यापि विवक्षायाः सत्त्वेऽपि नखं लुनातीति नखल्वित्येकपदेन वस्तुसदर्थान्तरपररूपान्तरमादाय समालङ्कारोऽप्यस्त्येव । श्लेषलब्धासदिष्टावाप्तिप्रतीतिमात्रेणापि गतमुदाहरणम् । यथा—

सत्यं तपः सुगत्यै यत्त्वाम्बुषु रविप्रतीक्षं सत ।
अनुभवति सुगतिमब्जं त्वत्पदजन्मानि समस्तकमनीयम् ॥९२॥

( अ०चं० )—भेदान्तरमाह—विनेति ॥ अनिष्टं विना यमर्थं कर्तुमुद्यतस्तत्सिद्धिरपि सममित्यनुवृत्त्या योज्यम् । यदर्थमिति पाठे यश्चासावर्थश्चेत्यर्थः ॥ युक्त इति । वारणं निवारणं वारणो गजश्च युक्तो न स्यादपि तु स्यादेवेत्यर्थः। शोभत इति क्वचित्पाठः साधुरेव । अपिसङ्गृहीतस्यापिशब्दङ्गृहीतस्य । नर्मवचनं परिहासवचनम् । अत्रेष्टावाप्तिः श्लेषकल्पिता बोध्या ॥ इष्टार्थप्रतीतिरिति । इष्टार्थत्वेन प्रतीतिरित्यर्थः ॥ अप्रतिहत इति । अनिष्टस्येष्टाभिन्नत्वेन ज्ञानकालेऽनिष्टत्वेनाप्रतिभासादिति भावः ॥ उच्चैरिति । गजैरटनं तदारोहणपूर्वकं गमनम् । इह त्वन्नगरे उषितोऽस्मि वासं कृतवानस्मि । तदेव मत्प्रार्थ्यमानमेव उच्चाटनं दूरनिरसनमेव । उच्चैर्गजैरटनं प्रति मां लम्भयसे प्रापयसि हि तस्मात् महतां सेवा विफला न भवतीति मुखे स्तुतिः । ततो दूरनिरसनमेवार्थान्तरपरिग्रहेण विषमालङ्कारस्फूर्त्या निन्दायां पर्यवसानम् । एतेन वैषम्यस्य निन्दारूपस्य व्याजस्तुतिविषयत्वेन तथापवाद इति निरस्तम् । विषमस्य निन्दामूलत्वेन तद्रूपत्वाभावादिति । इष्टार्थावाप्तिसत्त्वेऽपि वास्तविकेष्टार्थप्राप्तिसत्त्वेऽपि ॥ न क्षतिरिति । अनिष्टप्रतीतेराभासरूपत्वेनापर्यवसानादिति भावः ॥ शस्त्रमिति तदेव नखत्वेव । एकपदत्वेनेत्युपलक्षणे

तृतीया । एकपदत्वोपलक्षितं यद्वस्तु सदर्थान्तरपरं रूपान्तरमित्यर्थः । अर्थान्तरं च वास्तविकं पदव्युत्पत्तिकथनेन दर्शितमेव ॥ श्लेषलब्धेति । श्लेषेण लब्धा असती वस्तुतोऽविद्यमाना या इष्टावाप्तिप्रतीतिर्व्यवच्छेदः । युक्तो वारणलाभोयमित्यत्र किञ्चिदनिष्टस्योच्चैरित्यत्र चोत्कटानिष्टस्य प्रतीतिसत्त्वादुदाहरणान्तरमाह-यथेति ॥ नायिकां प्रति नायकस्योक्तिः । हे तन्वि तवः शोभनगत्यैव भवतीति सत्यं यद्यस्माद्दब्जं कमलमम्बुषु जलेषु रविं प्रतीक्षते तादृशं सत्तप्त्वा तपः कृत्वा त्वत्पदरूपे जन्मनि समस्तेभ्यः कमलेभ्यः कमनीयं सुन्दरं सत्सु गतिं शोभनां गतिमनुभवतीत्यन्वयः । अत्र कमलस्योत्तमलोकरूपगतिप्राप्तये तपस्यतस्तदलाभेऽपि शोभनगमनस्य गतिशब्दश्लेषबलादिष्टत्वेन प्रतीतेरिष्टावाप्तिप्रतीतिमात्रं नत्वनिष्टप्रतिभासोऽपीति ॥ ९२ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां समालङ्कारप्रकरणम् ॥ ३९ ॥

---

## विचित्रालङ्कारः ४०.

(चन्द्रा०)-विचित्रं तत्प्रयत्नश्चेद्विपरीतः फलेच्छया ।
नमन्ति सन्तस्त्रैलोक्यादपि लब्धुं समुन्नतिम् ॥९३॥

( कुव० )-यथा वा-

मलिनयितुं खलवदनं विमलयति जगन्ति देव कीर्तिस्ते ।
मित्राह्लादं कर्तुं मित्राय द्रुह्यति प्रतापोऽपि ॥ ९३ ॥

( अ० चं० )-विचित्रमिति ॥ फलेच्छया विपरीतः प्रयत्नश्चेद्विचित्र नामालङ्कारः । इष्टविपरीताचरणमिति यावत् ॥ नमन्तीति । नम्रीभवन्तीत्यर्थः । समुन्नतिमुच्चताम् ॥ मलिनयितुमिति । मलिनीकर्तुमित्यर्थः । विमलयति निर्मलीकरोति । जगन्ति त्रिभुवनानि । मित्रं सुहृन्मित्रः सूर्यश्च ॥ ९३ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां विचित्रालङ्कारप्रकरणम् ॥ ४० ॥

---

## अधिकालङ्कारः ४१.

(चन्द्रा०)-अधिकं पृथुलाधारादाधेयाधिक्यवर्णनम् ।
ब्रह्माण्डानि जले यत्र तत्र मान्ति न ते गुणाः ॥९४॥

( कुव० )-अत्र यत्र महाजलौघेऽनन्तानि ब्रह्माण्डानि बुद्बुदकल्पानीत्याधारस्यातिविशालत्वं प्रदर्श्य तत्र न मान्तीत्याधेयानां गुणानामाधिक्यं वर्णितम्।

यथा वा-युगान्तकालप्रतिसंहृतात्मनो
जगन्ति यस्यां सविकाशमासत।
तनौ ममुस्तत्र न कैटभद्विष-
स्तपोधनाभ्यागमसम्भवा मुदः॥ ९४॥

( अ०चं० )-अधिकमिति। पृथुलादाधेयापेक्षया विशालादाधारादाधेयस्याधिक्यवर्णनमेकोधिकालंकारः॥ युगान्तेति। युगान्तकाले प्रलये प्रतिसंहृतः स्वस्मिल्लँयं प्रापित आत्मा स्वविलासरूपः प्रपञ्चो येन तादृशस्य कैटभद्विषः श्रीकृष्णस्य यस्यां तनौ जगन्ति भुवनानि विकाशसहितं यथा स्यात्तथा आसत स्थितानि तत्र तस्यां तनौ तपोधनस्य नारदस्याभ्यागमात्सम्भवो यासां ता मुदः प्रीतयो न ममुरित्यन्वयः॥९४॥

(चन्द्रा०)-पृथ्वाधेयाद्यदाधाराधिक्यं तदपि तन्मतम्।
कियद्वाग्ब्रह्म यत्रैते विश्राम्यन्ति गुणास्तव॥९५॥

( कुव० )-अत्रैत इति प्रत्यक्षदृष्टमहावैभवत्वेनोक्तानां गुणानां विश्राम्यंतीत्यसम्बाधावस्थानोक्त्याधारस्य वाग्ब्रह्मण आधिक्यं वर्णितम्।

यथा वा-अहो विशालं भूपाल भुवनत्रितयोदरम्।
माति मातुमशक्योपि यशोराशिर्यदत्र ते॥

अत्र यद्यप्युदाहरणद्वयेपि कियद्वाग्ब्रह्मेति अहो विशालमिति चाधारयोः प्रशंसा क्रियते तथापि तनुत्वेन सिद्धवत्कृतयोः शब्दब्रह्मभुवनोदरयोर्गुणयशोराश्यधिकरणत्वेनाधिकत्वं प्रकल्प्यैव प्रशंसा क्रियत इति तत्प्रशंसा प्रस्तुतगुणयशोराशिप्रशंसायामेव पर्यवस्यति॥ ९५॥

( अ०च० )-पृथ्विति॥ विशालादाधेयाद्यदाधारस्याधिक्यं तदप्यधिकम्॥ कियदिति। अपरिमितमित्यर्थः। वाक्शब्द एव ब्रह्म। इयं च परमेश्वरं प्रति भक्तस्योक्तिः॥ असम्बाधेति। असंकटेत्यर्थः॥ अहो इति।

माति सम्माति । मातुमशक्योऽपरिमितः । अत्र भुवनत्रयोदरे । नन्वाधारयोः शब्दब्रह्मभुवनोदरयोरप्रस्तुतत्वेनाप्रशंसनीयत्वात्तदाधिक्यवर्णनमयुक्तमित्याशंक्याह-अत्रेति । न चात्राप्रस्तुतप्रशंसा शंकनीया, प्रस्तुतस्याप्यभिधानादिति । इत्थं चाधाराधेयान्यतरस्य तनोरप्याधिक्यवर्णनमिति सामान्यलक्षणम्बोध्यम् ॥ ९५ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायामधिकालङ्कारप्रकरणम् ॥ ४१ ॥

---

## अल्पालङ्कारः ४२.

(चंद्रा०)-अल्पं तु सूक्ष्मादाधेयाद्यदाधारस्य सूक्ष्मता ।
मणिमालोर्मिका तेऽद्य करे जपवटीयते ॥ ९६ ॥

अत्र मणिमालामयोर्मिका तावदंगुलिमात्रपरिमितत्वात्सूक्ष्मा साऽपि विरहिण्याः करे कङ्कणवत्प्रवेशिता तस्मिन् जपमालावल्लम्बत इत्युक्त्या ततोऽपि करस्य विरहकार्श्यादतिसौक्ष्म्यं दर्शितम् ।

यथा वा-यन्मध्यदेशादपि ते सूक्ष्मं लोलाक्षि दृश्यते ।
मृणालसूत्रमपि ते न सम्माति स्तनान्तरे ॥ ९६ ॥

( अ०चं० )-अल्पमिति ॥ यदिति सामान्ये नपुंसकम् । स्वापेक्षया सूक्ष्मादाधेयादाधारस्य सूक्ष्मता यत्तदल्पं नामालङ्कारः ॥ मणीति । मणिपंक्तिरूपा ऊर्मिका अंगुलीयकं ते करे अद्य विरहावस्थायां जपमालायत इत्यर्थः । वटीशब्दस्य गुटिकापर्यायत्वात् । अतिसूक्ष्मता आधेयभूतमालापेक्षयापि सूक्ष्मता ॥ यदिति । हे चञ्चलाक्षि तव मध्यभागादपि यत्सूक्ष्मं दृश्यते तत् मृणालसूत्रमपि तव स्तनयोरन्तरे मध्ये न मातीत्यन्वयः ॥ ९६ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायामल्पालङ्कारप्रकरणम् ॥ ४२ ॥

---

## अन्योन्यालङ्कारः ४३.

(चंद्रा०)-अन्योन्यं नाम यत्र स्यादुपकारः परस्परम् ।
त्रियामा शशिना भाति शशी भाति त्रियामया ९७॥

(कुव०) यथा वा–यथोर्ध्वाक्षः पिबत्यम्बु पथिको विरलांगुलिः।
तथा प्रपापालिकाऽपि धारां वितनुते तनुम् ॥

अत्र प्रपापालिकायाः पथिकेन स्वासत्त्या पानीयदानव्याजेन बहुकालं स्वमुखावलोकनमभिलषन्त्या विरलांगुलिकरणतश्चिरं पानीयदानानुवृत्तिसम्पादनेनोपकारः कृतः । तथा प्रपापालिकयापि पानीयपानव्याजेन चिरं स्वमुखावलोकनमभिलषतः पथिकस्य धारातनूकरणतश्चिरं पानीयपानानुवृत्तिसम्पादनेनोपकारः कृतः । अत्रोभयोर्व्यापाराभ्यां स्वस्वोपकारसद्भावेऽपि परस्परोपकारोऽपि न निवार्यते ॥ ९७ ॥

( अ० चं )–अन्योन्यमिति ॥ यत्र परस्परमुपकारः स्यात्तत्रान्योन्यं नामालङ्कारः ॥ त्रियामा रात्रिः ॥ यथेति । ऊर्ध्वाक्ष ऊर्ध्वनयनः प्रपापालिका प्रपादानाधिकृता काचिद्वनिता । धारां जलधाराम् । तनुं सूक्ष्माम् ॥ अत्रेति । प्रपापालिकायाः पथिकेनोपकारः कृत इत्यन्वयः । स्वासत्त्येत्यादि प्रपापालिकाया विशेषणम् । सम्पादनेन करणभूतेन । एवं प्रपापालिकयापि पथिकस्योपकारः कृत इत्यन्वयः । यत्तु स्वमुखावलोकनमभिलषन्त्या इत्यत्र स्वशब्दस्य प्रपापालिकाबोधकत्वमेव न्याय्यं न पान्थबोधकत्वं यद्विशेषणघटकत्वेन स्वनिजादिशब्दा उपात्तास्तद्बोधका इति व्युत्पत्तिरिति कैश्चिदुक्तम् । तदयुक्तम् । मुख्यविशेष्यविशेषणघटकस्यैव स्वनिजादिशब्दस्य मुख्यविशेष्यमात्रगामित्वव्युत्पत्तेः, यथा देवदत्तस्य पुत्रः स्वमातृभक्त इत्यादौ स्वशब्दस्य तादृशपुत्रगामित्वम्, न तु गुणभूतदेवदत्तगामित्वम् । अत एवेदृशस्थल एव । "निजतनुस्वच्छलावण्यवापीसम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्या" इत्यत्राभवन्मरुयोगत्वं दूषणमुदाहृतं मम्मटभट्टैः काव्यप्रकाशिकायाम् । अन्यत्र तु न स्वविशेष्यगामित्वनियमः । स्वाश्रितानां विप्राणामयं पालकः स्वाज्ञाकारिणां भृत्यानामयं कल्पवृक्ष इत्यादौ व्यभिचारात् । न चैवं स्वदाररतानां विप्राणामहं भक्त इत्यत्र मदीयदाररतानामिति प्रतीतिः स्यादिति वाच्यम् । तात्पर्यस्य नियामकत्वेनापत्त्यभावादिति ॥ ९७ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानंदटीकायामन्योन्यालङ्कारप्रकरणम् ॥ ४३ ॥

## विशेषालङ्कारः ४४.

(चन्द्रा०)–विशेषः ख्यातमाधारं विनाप्याधेयवर्णनम् ।
गतेऽपि सूर्ये दीपस्थास्तमश्छिन्दन्ति तत्कराः ॥ ९८ ॥

( कुव० )–यथा वा–

कमलमनम्भसि कमले कुवलय एतानि कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥

अत्राद्ये सूर्यस्य प्रसिद्धाधारस्याभावेऽपि तत्कराणामन्यत्रावस्थितिरुक्ता । द्वितीये त्वम्भसः प्रसिद्धाधारस्याभावेऽपि कमलकुवलययोरन्यत्रावस्थितिरुक्ता क्वचित्प्रसिद्धाधाररहितानामाधारान्तरनिर्देशं विनैवाप्रलयमवस्थितेर्वर्णनं दृश्यते ।

यथा वा–

दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥

अत्र कवीनामभावेऽपि तद्गिरामाधारान्तरानिर्देशं विनैवाप्रलयमवस्थितिर्वर्णिता ॥ ९८ ॥

( अ०चं० )–विशेष इति ॥ ख्यातं प्रसिद्धम् । तदुक्तम्–"विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः ।" इति । छिन्दन्ति नाशयन्ति । तत्कराः सूर्यकिरणाः । रात्रावादित्यस्याग्नौ प्रवेशश्रवणाद्दीपस्थत्वम् ॥ कमलमिति । अत्र कमलत्वादिना मुखादेरध्यवसानं बोध्यम् । कुवलये नेत्रे एतानि कमलकुवलयानि कनकलतारूपायां कामिन्याम् । सा च कनकलतिका च । निर्देशः कथनम् । आप्रलयं प्रलयपर्यन्तम् ॥ दिवमिति । दिवमुपयातानामपि येषामनल्पगुणगणयुक्ता गिरः आकल्पं कल्पपर्यन्तं जगन्ति भुवनानि रमयन्तीत्यन्वयः ॥ ९८ ॥

(चन्द्रा०)–विशेषः सोऽपि यद्येकं वस्त्वनेकत्र वर्ण्यते ।
अन्तर्बहिः पुरः पश्चात्सर्वदिक्ष्वपि सैव मे ॥ ९९ ॥

( कुव० )–यथा वा–

हृदयान्नापयातोऽसि दिक्षु सर्वासु दृश्यसे ।

वत्स राम गतोऽसीति सन्तापेनानुमीयसे ॥ ९९ ॥

(अ०चं०)-प्रभेदान्तरमाह-यदीति ॥ ९९ ॥

(चन्द्रा०)-किञ्चिदारम्भतो शक्यवस्त्वन्तरकृतिश्च सः।
त्वां पश्यता मया लब्धं कल्पवृक्षनिरीक्षणम्॥१००॥

(कुव०)-यथा वा-स्फुरदद्भुतरूपमुत्प्रताप-
ज्वलनं त्वां सृजतानवद्यविद्यम्।
विधिना ससृजे नवो मनोभू-
र्भुवि सत्यं सविता बृहस्पतिश्च॥

अत्राद्ये राजदर्शनारम्भेण कल्पवृक्षदर्शनरूपाशक्यवस्त्वन्तरकृतिः। द्वितीये राजसृष्ट्यारम्भेण मनोभ्वादिसृष्टिरूपा शक्यवस्त्वन्तरकृतिः ॥ १०० ॥

(अ०चं०)-तृतीयं प्रकारमाह-किञ्चिदिति ॥ किञ्चित्पदार्थारम्भेणाशक्यस्य वस्त्वन्तरस्य कृतिः करणं च स विशेषः॥ त्वामिति। प्रभुं प्रति याचकोक्तिः॥ स्फुरदिति। उत्कटः प्रतापरूपो ज्वलनोऽग्निर्यस्येत्यर्थः। उक्तविशेषणं त्वां सृजता विधिना भुवि नवो मनोभ्वादिः ससृजे सृष्ट इति सत्यमित्यन्वयः अत्र चोक्तभेदत्रयान्यतमत्वं समान्यलक्षणं बोध्यम् ॥ १०० ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां विशेषालङ्कार-
प्रकरणम् ॥ ४४ ॥

---

## व्याघातालङ्कारः ४५.

(चं०)-स्याद्व्याघातोऽन्यथाकारि तथाकारिक्रियेतचेत्
यैर्जगत्प्रीयते हन्ति तैरेव कुसुमायुधः ॥ १०१ ॥

(कुव०)-यद्यत्साधनत्वेन लोकेऽवगतं तत्केनचित्तद्विरुद्धसाधनं क्रियेत चेत्स व्याघातः। यद्वा-यत्साधनतया केनचिदुपात्तं तदन्येन तत्प्रतिद्वन्द्विना तद्विरुद्धसाधनं क्रियेत चेत्सोऽपि व्याघातः। तत्राद्य उदाहृतः।

द्वितीयो यथा—दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥१०१॥

( अ० चं० )—स्यादिति ॥ तथाकारि तत्कार्यसाधनवस्तु अन्यथाकारि तत्कार्यविरुद्धकार्यसाधनं चेत्क्रियेत तदा व्याघातोऽलङ्कारः स्यादित्यर्थः ॥ यैरिति । यैः कटाक्षविभ्रमादिभिर्जगत्प्रीयते सन्तुष्यति तैरेव कुसुमायुधो हन्तीत्यन्वयः । विरूपाक्षस्य हरस्य जयिनीर्विजयकारिणीः । स्तुवे स्तौमि ॥ १०१ ॥

(चन्द्रा०)—सौकर्येण निबद्धापि क्रिया कार्यविरोधिनी।
दया चेद्वाल इति मय्यपरित्याज्य एव ते ॥१०२॥

( कुव० )—कार्यविशेषनिष्पादकतया केनचित्सम्भाव्यमानादर्थादन्येन कार्यविरोधिक्रियासौकर्येण समर्थ्यते चेत् सोऽपि व्याघातः । कार्यविरुद्धक्रियायां सौकर्यं कारणस्य सुतरां तदानुगुण्यम् । यथा जैत्रयात्रोन्मुखेन राज्ञा युवराजस्य राज्य एव स्थापने यत्कारणत्वेन सम्भावितं बाल्यं तत्प्रत्युत तद्विरुद्धस्य सहनयनस्यैव कारणतया युवराजेन परित्यागस्यायुक्तत्वं दर्शयता समर्थ्यते ।

यथा वा—लुब्धो न विसृजत्यर्थं नरो दारिद्र्यशङ्कया ।
दातापि विसृजत्यर्थं तयैव ननु शङ्कया ॥

अत्र पूर्वोत्तरार्द्धे पक्षप्रतिपक्षरूपे कयोश्चिद्वचने इति लक्षणानुगतिः ॥ १०२ ॥

( अ०चं० )—भेदान्तरमाह—सौकर्येणेति ॥ कारणस्यानुगुण्याधिक्येनेत्यर्थः । निबद्धा कविवर्णिता । कार्यविरोधिनी पराभिमतकार्यविरुद्धा ॥ दयेति । दिग्विजयाय प्रस्थितं राजानं प्रति युवराजस्योक्तिः। बाल इत्यतो मयि दया यौवराज्ये स्थापनरूपा चेत्तदा तस्मादेव हेतोरहं तवापरित्याज्य एव किन्तु स्वेन सह नेतव्य इत्यर्थः ॥ अर्थादिति हेतौ पञ्चमी । अन्वयश्चास्य समर्थ्यते इत्यनेन । अन्येन वक्त्रा ॥ जैत्रेति । जयसाधनेत्यर्थः ॥ लुब्ध इति । तयैव शङ्कया दारिद्र्यशङ्कयैव । ननु निश्चितम् । अत्र पूर्वार्द्धे लुब्धस्य दानाभावसाधकत्वाभिमतदारिद्र्यशङ्कारूपपूर्वपक्षनिरूपणम् । दातुस्तु सैव विरुद्धदानसाधकत्वेन सम्मतेति पूर्ववि-

रुद्धपक्षनिरूपणमुत्तरार्द्धं । यद्यपि दारिद्र्यस्य तात्कालिकत्वेन जन्मान्तरीयत्वेन च शङ्का भिन्ना तथाप्यभेदाध्यवसायान्न लक्षणसमन्वय इति बोध्यम् । सामान्यलक्षणं पूर्ववदन्यतमत्वघटितमनुसन्धेयमिति दिक् ॥ १०२ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां व्याघातालङ्कारप्रकरणम् ॥ ४५ ॥

---

## कारणमालालङ्कारः ४६.

(चंद्रा०)-गुम्फः कारणमाला स्याद्यथाप्रक्प्रान्तकारणैः।
नयेन श्रीः श्रिया त्यागस्त्यागेन विपुलं यशः १०३

(कुव०)-उत्तरोत्तरकारणभूतपूर्वपूर्वैः पूर्वपूर्वकारणभूतोत्तरोत्तरैर्वा वस्तुभिः कृतो गुम्फः कारणमाला । आद्योदाहृता । द्वितीया यथा-

भवन्ति नरकाः पापात्पापं दारिद्र्यसम्भवम् ।
दारिद्र्यमप्रदानेन तस्माद्दानपरो भवेत् ॥ १०३ ॥

( अ० चं० )-गुम्फ इति । रचनेत्यर्थः । कैस्तत्राह-यथेति ॥ प्राक् च प्रान्तं च प्राक्प्रान्ते ते अनतिक्रम्येति यथाप्राक्प्रान्तं यानि कारणानि तैः । पूर्वपूर्वं प्रति कारणैरुत्तरोत्तरं प्रति कारणैश्चेत्यर्थः । एवं चोत्तरोत्तरेत्यादि०व्युत्क्रमेणाभिधानमुदाहरणक्रमानुरोधेनेति ज्ञेयम् ॥ १०३ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां कारणमालालङ्कारप्रकरणम् ॥ ४६ ॥

---

## एकावल्यलङ्कारः ४७.

(चन्द्रा०)-गृहीतमुक्तरीत्यार्थश्रेणिरेकावलिर्मता ।
नेत्रे कर्णान्तविश्रान्ते कर्णौ दोस्तम्भदोलनौ १०४॥
दोस्तम्भौ जानुपर्यन्तप्रलम्बनमनोहरौ ।
जानुनी रत्नमुकुराकारे तस्य हि भूभुजः ॥ १०५ ॥

( कुवल० )-उत्तरोत्तरस्य पूर्वपूर्वविशेषणभावः पूर्वपूर्वस्यो-

त्तरोत्तरविशेषणभावो वा गृहीतमुक्तरीतिः । तत्राद्यः प्रकार उदाहृतः । द्वितीयो यथा–

दिक्कालात्मसमैव यस्य विभुता यस्तत्र विद्योतते
यत्रामुष्य सुधीभवन्ति किरणा राशेः स यासामभूत् ।
यस्तत्पित्तमुषःसु योऽस्य हविषे यस्तस्य जीवातवे ।
वोढा यद्गुणमेषमन्मथरिपोस्ताःपान्तुनो मूर्तयः॥१०४॥१०५॥

( अ०चं० )–गृहीतेति ॥ वक्ष्यमाणया गृहीतमुक्तरीत्या निबद्धार्थपंक्तिरेकावलिरलङ्कारः ॥ नेत्र इति । तस्य भूभुज इति सर्वत्र सम्बध्यते । दोस्तम्भयोर्भुजस्तम्भयोर्दोलितमान्दोलनं ययोस्तौ । दोलनाविति पाठे दोलनं दोला ययोरस्तीति विग्रहः । रत्नमुकुरो रत्नदर्पणः ॥ दिक्कालेति । दिक्कालात्मभिस्तुल्या यस्याकाशस्य विभुता । यश्च तत्राकाशे विशेषेण द्योतते सूर्यः । यत्र च चन्द्रे अमुष्य सूर्यस्य किरणा अमृतरूपा भवन्ति । स च चन्द्रो यासामपां राशेः समुद्रादभूत् । यश्चाग्निस्तासामपां पित्तं भवति । 'शुचिरप्पित्तम्' इति कोशात् । यश्च यजमान उषस्सु प्रातःकालेऽप्यस्य वह्नेर्हविषे हविर्दानाय भवति । यश्च वायुः प्राणरूपस्तस्य यजमानस्य जीवातवे जीवनौषधाय भवति । यस्याश्च पृथिव्या गुणं गन्धमेष वायुर्वोढा ता मन्मथरिपोर्हरस्याष्टौ मूर्तयो वो युष्मान्पान्त्वित्यन्वयः ॥ १०४ ॥ १०५ ॥

इत्यलङ्कारचंद्रिकायां कुवलयानन्दटीकायामेकावल्यलङ्कारप्रकरणम् ॥ ४७ ॥

---

## मालादीपकालङ्कारः ४८.

(चन्द्रा०)–दीपकैकावलीयोगान्मालादीपकमिष्यते ।
स्मरेण हृदये तस्यास्तेन त्वयि कृता स्थितिः॥१०६॥

( कुव० )–अत्र स्थितिरिति पदमेकं स्मरेण तस्या हृदये स्थितिः कृता हृदयेन त्वयि स्थितिः कृतेत्येवं वाक्यद्वयान्वयि अतो दीपकम् । गृहीतमुक्तरीतिसद्भावादेकावली चेति दीपकैकावलीयोगः । यथा वा–

सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाकर्णय येनयेन सहसा यद्यत्समासादितम् ।

कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥

अत्र येनयेन सहसा यद्यत्समासादितमिति संक्षेपवाक्यस्थितमेकं समासादितपदं कोदण्डेन शरा इत्यादिषु षट्स्वपि विवरणवाक्येषु तत्तदुचितलिङ्गवचनविपरिणामेनान्वेतीति दीपकम्। शरादीनामुत्तरोत्तरविशेषणभावादेकावली चेति दीपकैकावलीयोगः ॥ १०६ ॥

( अ०चं० )-मालादीपकमिति ॥ मालादीपकं नामालङ्कारः। एकमिति वाक्यद्वयान्वयीत्यनेनान्वितम् ॥ अत इति। एतावन्मात्रेण दीपसादृश्याद्दीपकं न तु प्रागुक्तदीपकालङ्कारः। प्रकृताप्रकृतानां सादृश्यस्य गम्यत्वे तदङ्गीकारादिति भावः ॥ सङ्ग्रामेति। कोदण्डेन धनुषा शराः समासादिताः शरैः शत्रुमस्तकं समासादितं तेन शत्रुमस्तकेनापि भूमण्डलं तेन भूमण्डलेन त्वं पालकः समासादितो भवता कीर्त्तिरासादिता कीर्त्या च लोकत्रयं समासादितमित्यनुषङ्गेणान्वयः ॥ १०६ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां मालादीपकालङ्कारप्रकरणम् ॥ ४९ ॥

---

## सारालङ्कारः ४९.

(चन्द्रा०)उत्तरोत्तरमुत्कर्षः सार इत्यभिधीयते।
मधुरं मधु तस्माच्च सुधा तस्याः कवेर्वचः ॥१०७॥

( कुव० )-यथा वा-

अन्तर्विष्णोस्त्रिलोकी निवसति फणिनामीश्वरे सोऽपि शेते
सिन्धोः सोऽप्येकदेशे तमपि चुलकयां कुम्भयोनिश्चकार।
धत्ते खद्योतलीलामयमपि नभसि श्रीनृसिंह क्षितीन्द्र
त्वत्कीर्त्तेः कर्णनीलोत्पलमिदमपि च प्रेक्षणीयं विभाति ॥

अयं श्लाघ्यगुणोत्कर्षः। अश्लाघ्यगुणोत्कर्षो यथा-

तृणाल्लघुतरस्तूलस्तूलादपि च याचकः।
वायुना किं न नीतोऽसौ मामयं प्रार्थयेदिति।

उभयरूपो यथा-गिरिर्महान्गिरेरब्धिर्महानब्धेर्नभो महत् ।
नभसोऽपि महद्ब्रह्म ततोऽप्याशा गरीयसी ॥

अत्र ब्रह्मपर्यन्तेषु महत्त्वं श्लाघ्यगुणः । प्रकृतार्थाशाया-मश्लाघ्यगुणः ॥ १०७ ॥

( अ०चं० )-सार इति । सारो नामालङ्कारः । तस्याः सुधातः॥ अन्तरिति। विष्णोरन्तरुदरे त्रयाणां लोकानां समाहारस्त्रिलोकी । सोऽपि विष्णुरपि फणिनां नागानामीश्वरे शेषे शेते निद्राति । सोऽपि शेषोऽपि सिन्धोरे-कदेशे तिष्ठतीति विशेषः । तमपि सिन्धुमपि कुम्भयोनिरगस्त्यश्चुल-कयां चकार पीतवान् । अगस्त्योऽपि नभसि गगने खद्योतशोभां धत्ते । इदं गगनमपि प्रेक्षणीयं सुन्दरं त्वत्कीर्तेः कर्णभूषणं नीलोत्पलं विभा-तीत्यन्वयः ॥ तूलः कार्पासः । प्रकृतार्थाशायां प्रकृतार्थरूपायामा-शायाम् ॥ १०७ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां सारा-
लङ्कारप्रकरणम् ॥ ४९ ॥

---

## यथासंख्यालङ्कारः ५०.

( चं० )--यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः ।
शत्रुं मित्रं विपत्तिं च जय रञ्जय भञ्जय ॥ १०८॥

( कुवल० )-यथा वा-

शरणं किं प्रपन्नानि विषवन्मारयन्ति वा ।
न त्यज्यन्ते न भुज्यन्ते कृपणेन धनानि यत् ।
अमुं क्रमालङ्कार इति केचिद्व्यवजहुः ॥ १०८ ॥

( अ०चं० )-क्रमिकाणां क्रमेणोक्तानां पदार्थानां तेनैव क्रमेणान्वयो यथा-संख्यं नामालङ्कारः ॥ शरणमिति । कृपणेन धनानि यत् न त्यज्यन्ते तत्किं तानि शरणं प्रपन्नानि, यच्च न भुज्यन्ते तत्किं विषवन्मारय-न्तीति क्रमेणान्वयः । केचिद्वामनादयः ॥ १०८ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां
यथासंख्यालङ्कारप्रकरणम् ॥ ५० ॥

---

पर्यायालङ्कारः ५१.

(चं०)—पर्यायो यदि पर्यायेणैकस्यानेकसंश्रयः।
पद्मं मुक्त्वा गता चन्द्रं कामिनीवदनोपमा ॥१०९॥

(कुव०)--अत्रैकस्य कामिनीवदनसादृश्यस्य क्रमेण पद्मचन्द्ररूपानेकाधारसंश्रयणं पर्यायः। यद्यपि पद्मसंश्रयणं कण्ठतो नोक्तं तथापि पद्मं मुक्त्वेति तत्परित्यागोक्त्या प्राक् तत्संश्रयाक्षेपेण पर्यायनिर्वाहः। अत एव—

"श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः
पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम्।
धत्ते वक्षः कुचसचिवतामद्वितीयं तु वक्त्रं
त्वद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥"

इत्यत्र पर्यायं काव्यप्रकाशकृदुदाजहार।

सर्वत्र शाब्दः पर्यायो यथा—

नन्वाश्रयस्थितिरियं तव कालकूट
केनोत्तरोत्तरविशिष्टपदोपदिष्टा।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥

सर्वोऽप्ययं शुद्धपर्यायः। सङ्कोचपर्यायो यथा—

प्रायश्चरित्वा वसुधामशेषां
छायासु विश्रम्य ततस्तरूणाम्।
प्रौढिं गते सम्प्रति तिग्मभानौ
शैत्यं शनैरन्तरपामयासीत् ॥

अत्र शैत्यस्योत्तरोत्तरमाधारसङ्कोचात्सङ्कोचपर्यायः।

विकासपर्यायो यथा—

बिम्बोष्ठ एव रागस्ते तन्वि पूर्वमदृश्यत।
अधुना हृदयेऽप्येष मृगशावाक्षि दृश्यते ॥

अत्र रागस्य पूर्वाधारपरित्यागेनाधारान्तरसंक्रमणामिति विकासपर्यायः ॥ १०९ ॥

( अ०चं० )–पर्याय इति ॥ पर्यायेण क्रमेण अनेकसंश्रयोऽनेकाश्रितत्वम् । तदुक्तम् "एवं क्रमेणानेकस्मिन्पर्यायः" इति ॥ पद्ममिति । रात्रौ पद्मसङ्कोचात्त्यागः । अत एव त्यागेन पूर्वसंश्रयणाक्षेपादेव ॥ श्रोणीति । जघनबन्धस्तनुतां कृशतां त्यजति मध्यभागस्तां सेवते आश्रयति । वक्षः स्थलं कुचसचिवतां कुचसहितत्वं धत्ते । वक्त्रं त्वद्वितीयम् । अत्र पूर्वं वक्षसोऽद्वितीयत्वावगमात्पर्यायसम्भवो ज्ञेयः । अद्वितीयत्वं द्वितीयरहितत्वमनुपमत्वं चैकत्वेनाध्यवसितम् । एवं चोदाहरणद्वयेऽपि पूर्वाधारसमाश्रयण गम्यमुत्तराधारसमाश्रयणं शाब्दमिति । सर्वत्र सर्वाधारसमाश्रयणांशे ॥ नन्विति । हे कालकूट उत्तरोत्तरविशिष्टमुत्कृष्टं पदं स्थानं यस्यां तादृशी इयमाश्रयस्थितिस्तव केनोपदिष्टेत्यन्वयः । हृदये अभ्यन्तरे । अवस इति शेषः । अथानन्तरं वृषलक्ष्मणो हरस्य कण्ठे । अधुना पुनरिति सम्बन्धः । शुद्धः सङ्कोचविकासामिश्रितः ॥ प्राय इति । शैत्यं प्रायोऽशेषां वसुधां हेमन्ते चरित्वा ततो वसन्ते तरूणां छायासु विश्रम्य सम्प्रति ग्रीष्मे तिग्मभानौ सूर्ये प्रौढिं प्रागल्भ्यं प्राप्ते सति शनैरपां जलानामन्तरमभ्यन्तरे अयासीत् गच्छति स्मेत्यर्थः ॥ बिम्बोष्ठ एवेति । बिम्बफलसदृशे ओष्ठे रागो रक्तिमा अनुरागश्च । एष रागः । अत्र रागस्य भेदेऽप्यभेदाध्यवसायादेकत्वम् । यत्तु एकसम्बन्धनाशोत्तरमपरसम्बन्धे सत्येव लोके पर्यायपदप्रयोगाच्छ्रोणीबन्ध इति प्रकाशोदाहृते तथैव दृष्टत्वाच्च बिम्बोष्ठ एवेत्यत्र पर्यायकथनमयुक्तमिति केनचिदुक्तं तत्प्रकाश एव बिम्बोष्ठ इत्युदाहरणे पर्यायसमर्थनाद्भ्रान्तप्रलपनमिवोपेक्षणीयम् । आलङ्कारिकपरिभाषितानां शब्दानां लोकव्यवहारविसंवादस्याकिञ्चित्करत्वाच्चेति दिक् ॥ १०९ ॥

(चंद्रा०)–एकस्मिन्यद्यनेकं वा पर्यायः सोऽपि सम्मतः।
अधुना पुलिनं तत्र यत्र स्रोतः पुराऽजनि ॥११०॥

( कुव० )–यथा वा–

पुराभूदस्माकं प्रथममविभिन्ना तनुरियं
ततो नु त्वम्प्रेयान्वयमपि हताशाः प्रियतमाः ।
इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं
हतानां प्राणानां कुलिशकठिनानां फलमिदम् ॥

अत्र दम्पत्योः प्रथममभेदस्ततः प्रेयसीप्रियतमभावस्ततो भार्यापतिभाव इत्याधेयपर्यायः ॥ ११० ॥

( अ० चं० )-भेदान्तरमाह-एकस्मिन्निति ॥ पर्यायेणेत्यनुवर्तते । एकस्मिन्नाधारे क्रमेण यद्यनेकं भवति सोऽपि पर्यायालङ्कारः सम्मत इत्यर्थः ॥ पुरेति । अस्माकमिति "अस्मदो द्वयोश्च" इति द्वयोरपि बहुवचनम् । पुरेत्यनेन स्थूलोऽतीतकाल उच्यते । तत्रापि प्रथमं तनुरविभिन्नाऽभूत् ततो नु वितर्के त्वं प्रियतमः वयं प्रियतमाः । इदानीं तु त्वं नाथः पतिः वयं भार्याः । इतोऽपरं किमिष्टमिति शेषः । कुलिशं वज्रम् । अत्र त्वं प्रेयानित्येकवचनेन एकरूपप्रेमपात्रत्वं व्यज्यते प्रियतमा इत्यादिबहुवचनेनैकरूपतद्व्यतिरेक इति बोध्यम् ॥ ११० ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां पर्यायालङ्कारप्रकरणम् ॥ ५१ ॥

---

## परिवृत्त्यलङ्कारः ५२.

**(चन्द्रा०)--परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथः ।**
**जग्राहैकं शरं मुक्त्वा कटाक्षात्स रिपुश्रियम् ॥१११॥**

( कुव० )-यथा वा-तस्य च प्रवयसो जटायुषः
स्वर्गिणः किमिव शोच्यतेऽधुना ।
येन जर्जरकलेवरव्यया-
त्क्रीतमिन्दुकिरणोज्ज्वलं यशः ॥१११॥

( अ०चं० )-परिवृत्तिरिति ॥ न्यूनाधिकयोर्मिथः परस्परं विनिमयः परिवृत्तिरलङ्कारः ॥ जग्राहेति । कटाक्षपूर्वकमेकं शरं मुक्त्वा रिपोः श्रियं जग्राहेत्यर्थः ॥ तस्य चेति । प्रवयसो वृद्धस्य जटायुषो गृध्रविशेषस्य स्वर्गं गतवतः किमिव शोचनीयं न किञ्चित् । जर्जरं जीर्णतरं कलेवरं शरीरं तस्य व्ययो रावणेन सह युद्धे त्यागस्तस्माद्यशः क्रीतम् । शरीरं दत्त्वा यशो गृहीतमित्यर्थः ॥ १११ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां परिवृत्त्यलङ्कारप्रकरणम् ॥ ५२ ॥

---

## परिसंख्यालङ्कारः ५३.

(चं०)-परिसङ्ख्या निषिध्यैकमेकस्मिन्वस्तुयन्त्रणम् ।
स्नेहक्षयः प्रदीपेषु न स्वान्तेषु नतभ्रुवाम् ॥ ११२ ॥

( कुव० )-यथा वा-विलङ्घयंति श्रुतिवर्त्म यस्यां
लीलावतीनां नयनोत्पलानि ।
बिभर्ति यस्यामपि वक्रिमाण-
मेको महाकालजटार्द्धचन्द्रः ॥

आद्योदाहरणे निषेधः शाब्दो द्वितीये त्वार्थः ॥ ११२ ॥

( अ०चं० )--परिसंख्येति ॥ एकं वस्तु प्रतिषिध्यापरस्मिन् वस्तुनो नियन्त्रणं नियमनं परिसंख्यालङ्कारः ॥ स्नेहेति । स्नेहस्तैलादिस्निग्धद्रव्यमनुरागश्च । स्वान्तेषु चित्तेषु ॥ विलंघयन्तीति । यस्यामुज्जयिनीपुर्याम् । श्रुतिः कर्णौ वेदश्च । वर्त्म मार्गं वक्रिमाणं कौटिल्यं वक्राकारतां च । महाकाल इति तत्रैव ख्यातं शिवलिङ्गम् ॥ ११२ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां परिसंख्यालङ्कार-
प्रकरणम् ॥ ५३ ॥

---

## विकल्पालङ्कारः ५४.

(चन्द्रा०)--विरोधे तुल्यबलयोर्विकल्पालङ्कृतिर्मता ।
सद्यः शिरांसि चापान्वा नमयन्तु महीभुजः ॥ ११३ ॥

( कुव० )-अत्र सन्धिविग्रहप्रमाणप्राप्तयोः शिरश्चापनमनयोर्युगपदुपस्थितयोर्युगपत्कर्तुमशक्ययोर्विकल्पः ।

यथा वा--पतत्यविरतं वारि नृत्यन्ति च कलापिनः ।
अद्य कान्तः कृतान्तो वा दुःखस्यान्तं करिष्यति ॥

प्रियसमागमश्चेन्न मरणमाशंसनीयं मरणे तु न प्रियसमागमसम्भव इति तयोराशंसायां विकल्पः ॥ ११३ ॥

( अ०चं० )-सन्धिविग्रहप्रमाणेति ॥ सन्धिविग्रहयोः कर्तव्यताबोधकप्रमाणेत्यर्थः ॥ ११३ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां विकल्पालङ्कार-
प्रकरणम् ॥ ५४ ॥

---

## समुच्चयालङ्कारः ५५.

(चन्द्रा०)-बहूनां युगपद्भावभाजां गुम्फः समुच्चयः।
नश्यन्ति पश्चात्पश्यन्ति त्रस्यंति च भवद्विषः॥११४॥

(कुव०)-अविरोधेन सम्भावितयौगपद्यानां नाशादीनां गुम्फनं समुच्चयः। यथा वा-

बिभ्राणा हृदये त्वया विनिहितं प्रेमाभिधानं नवं
शल्यं यद्विदधाति सा विधुरिता साधो तदाकर्ण्यताम्।
शेते शुष्यति ताम्यति प्रलपति प्रम्लायति प्रेङ्खति
भ्राम्यत्युल्लुठति प्रणश्यति गलत्युन्मूर्च्छति त्रुट्यति॥

अत्र कासांचित्क्रियाणां किञ्चित्कालभेदसम्भवेऽपि शतपत्रपत्रशतभेदन्यायेन यौगपद्यं विरहातिशयद्योतनाय विवक्षितमिति लक्षणाऽनुगतिः॥ ११४॥

( अ०चं० )-बहूनामिति॥ युगपद्भावो भवनं तद्भाजां बहूनां गुम्फो निबन्धः। वर्णनमिति यावत्। समुच्चयालङ्कारः॥ बिभ्राणेति। नायकं प्रति दूत्या इयमुक्तिः। हे साधो त्वया हृदये विनिहितं प्रेमाभिधानं नवं शल्यं धारयन्ती विधुरिता विरहविह्वला सा नायिका यद्विदधाति तदाकर्ण्यमित्यन्वयः। किं तदित्यपेक्षायामाह-शेते निद्राति। ताम्यति ग्लानिं प्राप्नोति। प्रकर्षेण म्लायति प्रेंखति चलति। प्रणश्यति नैर्बल्यातिशयेन मृतप्राया भवति। गलति खेदातिशयात्। त्रुट्यति क्षीणा भवतीति। कासांचित् शयनभ्रमणादीनाम्। शतपत्रस्य कमलस्य पत्रशतं दलशतम्॥ ११४॥

(चन्द्रा०)-अहंप्राथमिकाभाजामेककार्यान्वयेऽपि सः।
कुलं रूपं वयो विद्या धनं च मदयन्त्यमुम्॥११५॥

(कुव०)-यत्रैकः कार्यसिद्धिहेतुत्वेन प्रक्रान्तस्तत्रान्येऽपि यद्यहमहमिकया खले कपोतन्यायेन तत्सिद्धिं कुर्वन्ति सोऽपि समुच्चयः। यथा मदे आभिजात्यमेकं समग्रं कारणं तादृगेव रूपादिकमपि तत्साधनत्वेनावतरतीति।

यथा वा-प्रदानं प्रच्छन्नं गृहमुपगते सम्भ्रमविधि-
निरुत्सेको लक्ष्म्यामनभिभवगन्धाः परकथाः ।
प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः
श्रुतेऽत्यन्तासक्तिः पुरुषमभिजातं कथयति ॥११२॥

( अ०चं० )-अहंप्राथमिकेति ॥ अहंपूर्विकेत्यर्थः । 'अहं पूर्वमहं पूर्वमित्यहंपूर्विका स्त्रियाम् ।' इत्यमरः । एककार्यान्वये एककार्यसाधकत्वे । स समुच्चयालङ्कारः । अहमहमिकया परस्पराहङ्कारेण । आभिजात्यं कुलीनत्वम् । समग्रं पुष्कलम् ॥ प्रदानमिति । प्रच्छन्नं गुप्तं गृहं प्रत्युपगतेऽर्थादतिथौ । लक्ष्म्यां सत्यां निरुत्सेको गर्वाभावः । अभिभवो निन्दा तद्गन्धशून्याः । मौनमनुद्घाटनम् । सदसि सभायां परेण कृताया उपकृतेः कथनम् । श्रुते शास्त्रश्रवणे । सर्वप्रथमान्तानां पुरुषमभिजातं प्रथयतीत्यनेनान्वयः । अभिजातं कुलीनम् । प्रथयति कथयति ॥११५॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां समुच्चयाऽलङ्कारप्रकरणम् ॥ ५५ ॥

---

## कारकदीपकालङ्कारः ५६.

(चन्द्रा०)-क्रमिकैकगतानां तु गुम्फः कारकदीपकम् ।
गच्छत्यागच्छति पुनः पान्थः पश्यति पृच्छति ११६॥

( कुव० )-यथा वा-
निद्राति स्नाति भुङ्क्ते चलति कचभरं शोषयत्यन्तरास्ते
दीव्यत्यक्षैर्न चायं गदितुमवसरो भूय आयाहि याहि ।
इत्युद्दण्डैः प्रभूणामसकृदधिकृतैर्वारितान्द्वारि दीना-
नस्मान्पश्याब्धिकन्ये सरसिरुहरुचामन्तरङ्गैरपाङ्गैः ॥

आद्योदाहरणे श्रुतस्य पान्थस्य कर्तृकारकस्यैकस्य गमनादिष्वन्वयः, द्वितीये त्वध्याहृतस्य प्रभुकर्तृकारकस्य निद्रादिष्वन्वय इत्येकस्यानेकवाक्यान्वयेन दीपकच्छायापत्त्या कारकदीपकं प्रथमसमुच्चयप्रतिद्वन्द्वीदम् ॥ ११६ ॥

( अ०चं० )-क्रमिकेति ॥ क्रमिकाणामर्थात्क्रियाणामेककारकगतानां गुम्फो निबन्धः कारकदीपकं नामालङ्कारः । तदुक्तम्-"सैव क्रियासु बह्वीषु

कारकस्येति दीपकम् ।" इति । सैव सकृद्वृत्तिः । पश्यति सार्थम् । पृच्छति मार्गम् ॥ निद्रातीति । अङ्घिकन्ये प्रभूणामुद्यतदण्डैर्द्वारि अधिकृतैर्द्वारपालैरित्यसकृद्वारितानत एव दीनानस्मान्सरसीरुहद्युतीनां परमपरिचितैरपाङ्गैः कटाक्षैः पश्येत्यन्वयः । इति किम् । प्रभुर्निद्रातीत्यादि । अन्तः अन्तःपुरे । अक्षैः पाशैर्दीव्यति क्रीडति । भूयः पुनः । छायासादृश्यं मुख्यदीपकस्य पूर्वोक्तप्रकारेण सम्भवादिति भावः । प्रतिद्वन्द्वि विपरीतम् ॥ ११६ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां कारकदीपकालङ्कारप्रकरणम् ॥ ५६ ॥

---

## समाध्यलङ्कारः ५७.

(चन्द्रा०)--समाधिः कार्यसौकर्यं कारणान्तरसन्निधेः ।
उत्कण्ठिता च तरुणी जगामास्तं च भानुमान् ११७॥

(कुवल०)–यथा वा-मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्यैतदुदीर्णं घनगर्जितम् ॥

केनचिदारिप्सितस्य कार्यस्य कारणान्तरसन्निधानाद्यत्सौकर्यं तत्सम्यगाधानात्समाधिः । द्वितीयसमुच्चयप्रतिद्वन्द्वी अयं समाधिः । तत्र बहूनां प्रत्येकं समर्थानां खले कपोतिकान्यायेन युगपत्कार्यसाधनत्वेनावतारः । अत्र त्वेकेन कार्ये समारिप्सितेऽन्यस्य काकतालीयन्यायेनापतितस्य तत्सौकर्याधायकत्वमात्रम् । अत्रोदाहरणमुत्कण्ठितेति । उत्कण्ठैव प्रियाभिसरणे पुष्कलं कारणं नान्धकारागममपेक्षते "अत्यारूढो हि नारीणामकालज्ञो मनोभवः ।" इति न्यायात् दैवादापतता त्वन्धकारेण तत्सौकर्यमात्रं कृतमिति । एवं द्वितीयोदाहरणेऽपि योज्यम् ॥ ११७ ॥

( अ० चं० )–समाधिरिति ॥ कारणान्तरसन्निधेर्वशात् कार्यस्य सुकरत्वं समाधिरलङ्कारः । उत्कण्ठिता नायकसमीपं गन्तुम् ॥ मानमिति । मानं

निराकर्त्तुमशक्ताः पादयोः पतिष्यतो ममोपकाराय दिष्ट्या भाग्येनेदं घनगर्जितरूपं गर्जमुद्गतमित्यन्वयः । समुच्चये कारणानां तुल्यकक्षत्वमिह तु तद्विपरीतमतुल्यकक्षत्वमिति प्रतिद्वन्द्वित्वं तत्रेत्यादिना दर्शितम् ॥ ११७ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां समाध्यलङ्कार-प्रकरणम् ॥ ५७ ॥

---

## प्रत्यनीकालङ्कारः ५८.

( चन्द्रा० )-प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः ।
जैत्रनेत्रानुगौ कर्णावुत्पलाभ्यामधः कृतौ ॥११८॥

( कुव० )-यथा वा-

मम रूपकीर्त्तिमहरद्भुवि यस्तदनु प्रविष्टहृदयेयमिति ।
त्वयि मत्सरादिव निरस्तदयः सुतरां क्षिणोति खलु तां मदनः॥

एवं बलवति प्रतिपक्षे प्रतिकर्त्तुमशक्तस्य तदीयबाधनं प्रत्यनीकमिति स्थिते साक्षात्प्रतिपक्षे पराक्रमः प्रत्यनीकमिति कैमुतिकन्यायेन फलति ।

यथा-मधुव्रतौघः कुपितः स्वकीय-
मधुप्रपापद्मनिमीलनेन ।
बिम्बं समाक्रम्य बलात्सुधांशोः
कलङ्कमङ्के ध्रुवमातनोति ॥ ११८ ॥

( अ०चं० )-प्रत्यनीकमिति ॥ बलवतः शत्रोः पक्षे पक्षान्तःपातिनि तदीये यः पराक्रमस्तत्प्रत्यनीकं नामालंकारः, अनीकप्रतिनिधिरूपत्वात् ॥ जैत्रेति । उत्पलाभ्यां स्वजयकारिनेत्रानुसारिणौ कर्णावधःकृतौ तिरस्कृतौ । अवतंसतया तदुपरि स्थितत्वादधस्तात्कृतौ चेति श्लेषः ॥ ममेति । भुवि भूलोके मम रूपख्यातिं यो हृतवान् तस्मिन्ननुप्रविष्टमनुरक्तं हृदयं यस्याः तस्यानुप्रविष्टं हृदयं यस्यां वा तादृगियमिति त्वयि मत्सरादिव खलु निश्चितं निरस्तदयो मदनस्तां क्षिणोति क्षीणां करोतीत्यन्वयः । अत्र मत्सरादिवेति हेत्वंशे उत्प्रेक्षासत्त्वेऽपि तद्धेतुकप्रतिपक्षसम्बन्धिबाधनं प्रत्यनीकालङ्कारस्य विविक्तो विषय इति बोध्यम् ।

अत एव मम्मटभट्टैरपि "त्वं विनिर्जितमनोभवरूपः सा च सुन्दर भवत्यनुरक्ता । पञ्चभिर्युगपदेव शरैस्तां तापयत्यनुशयादिव कामः ॥" इत्युदाहृतम् । एवं च हेतूत्प्रेक्षयैव गतार्थत्वान्नेदमलङ्कारान्तरं भवितुमर्हतीति कस्यचिद्वचनमनादेयम् ॥ कैमुतिकेति । तत्सम्बन्धिबाधनापेक्षया साक्षात्तद्बाधने विशेषादिति भावः ॥ मध्विति । भ्रमरौघः स्वकीयमधुप्रपारूपस्य पद्मस्य निमीलनेन कुपितः सन् सुधांसोर्बिम्बं बलात्समाकृष्य तस्याङ्के मध्यभागे कलङ्कं ध्रुवमातनोतीत्यन्वयः ॥ ११८ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां प्रत्यनीकालङ्कारप्रकरणम् ॥ ५८ ॥

---

## अर्थापत्त्यलङ्कारः ५९.

(चं०)-कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते ।
स जितस्त्वन्मुखेनेन्दुः का वार्ता सरसीरुहाम् ११९

( कुव० )-अत्र स इत्यनेन पद्मानि येन जितानि इति विवक्षितं तथा च सोऽपि येन जितस्तेन पद्मानि जितानीति किमु वक्तव्यमिति दण्डापूपिकान्यायेन पद्मरूपस्यार्थस्य संसिद्धिः काव्यार्थापत्तिः । तान्त्रिकाभिमतार्थापत्तिव्यावर्तनाय काव्येति विशेषणम् ॥

यथा वा-अधरोऽयमधीराक्ष्या बन्धुजीवप्रभाहरः ।
अन्यजीवप्रभां हन्त हरतीति किमद्भुतम् ॥
स्वकीयं हृदयं भित्त्वा निर्गतौ यौ पयोधरौ ।
हृदयस्यान्यदीयस्य भेदने का कृपा तयोः ॥११९॥

( अ०चं० )-कैमुत्येनेति ॥ कैमुत्यन्यायेनेत्यर्थः । काव्येऽलङ्काररूपार्थापत्तिः काव्यार्थापत्तिः॥ दण्डापूपिकेति । दण्डाकर्षणे तदवलम्बिनामपूपानामाकर्षणं यथार्थसिद्धं तद्वदित्यर्थः ॥ व्यावर्तनायेति । लक्ष्यतावारणायेत्यर्थः ॥ अधरोयमिति । बन्धुजीवं बन्धूकपुष्पं तत्प्रभाहरो बन्धुभूतानां जीवानां प्रभाहरश्च । यत्त्वेतल्लक्षणमयुक्तम्, कैमुतिकन्यायस्य न्यूनार्थविषयत्वेनाधिकार्थापत्तावव्याप्तेः । यथा "तवाग्रे यदि दारिद्र्यं स्थितं भूप द्विजन्मनाम् । शनैः सवितुरप्यग्रे तमः स्थास्यत्य-

संशयम् ॥" अत्र शनैःशब्दमहिम्ना राजाग्रे दारिद्र्यस्थित्यपेक्षया सूर्याग्रे तमोऽवस्थानं दुःशकमेवेत्यवगतमपि न्यायसाम्यादापद्यते । ननु कैमुतिकन्यायेनेति केनचिदुक्तं तत्रेदं वक्तव्यम् । केनचिदर्थेन तुल्यन्यायत्वादर्थान्तरस्यापत्तिरर्थापत्तिरिति तदुक्तलक्षणमयुक्तम् । का वार्ता सरसीरुहामित्यादिकैमुत्यन्यायविषयार्थापत्तावव्याप्तेः । कैमुतिकन्यायस्य न्यूनार्थविषयत्वेन तुल्यन्यायत्वाभावादापादनाप्रतीतेश्चेति । न चात्र कैमुत्यन्यायतामात्रं न त्वलङ्कारत्वमिति युक्तम्, अलङ्कारतत्वाभियुक्तानां प्राचीनानां शून्यहृदयताया अपामरेण सम्भावयितुमशक्यत्वात् । लोकव्यवहारेपि कैमुत्यन्यायस्य चमत्कारित्वानुभवेन तेनैव न्यायेन तस्यालङ्कारतासिद्धेश्च । इत्थं च त्वदुक्तार्थापत्त्युदाहरणे वक्ष्यमाणः सम्भावनालङ्कारो योऽन्यैर्यद्यर्थोक्तौ च कल्पनमिति यद्यर्थातिशयोक्तित्वेनोक्तः । यद्यर्थातिशयोक्तावापाद्यापादकयोर्विपरीतार्थविश्रान्तत्वम्, इह त्वापादकस्य सिद्धत्वमापाद्यस्य सम्भाव्यमानत्वमिति वैचित्र्यं तु तदवान्तरभेदतायाः साधकं न तु तद्बहिर्भूततायाः इति न तत्राव्याप्तिशङ्कापीत्यलं विस्तरेण ॥ ११९ ॥

इत्यलंकारचन्द्रिकायां कुवलयानन्दटीकायामर्थापत्त्यलङ्कारप्रकरणम् ॥ ५९ ॥

---

## काव्यलिङ्गालङ्कारः ६०.

**(चन्द्रा०)–समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम् ।**
**जितोऽसि मन्द कन्दर्प मच्चित्तेऽस्ति त्रिलोचनः १२० ॥**

( कुव० )–अत्र कन्दर्पजयोपन्यासो दुष्करविषयत्वात्समर्थनसापेक्षः । तस्य मच्चित्तेऽस्ति त्रिलोचन इति स्वान्तःकरणे शिवसन्निधानप्रदर्शनेन समर्थनं काव्यलिङ्गम् । व्याप्तिधर्मतासापेक्षनैयायिकलिङ्गव्यावर्तनाय काव्यविशेषणम् । इदं वाक्यार्थहेतुकं काव्यलिङ्गम् । पदार्थहेतुकं यथा–

भस्मोद्धूलन भद्रमस्तु भवते रुद्राक्षमाले शुभं
हा सोपानपरम्परे गिरिसुताकान्तालयालङ्कृते ।
अद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखा–
लोकोच्छेदिनि मोक्षनामनि महामोहे निलीयामहे ॥

अत्र मोक्षस्य महामोहत्वमप्रसिद्धमिति तत्समर्थने सुखालोकोच्छेदिनीति पदार्थो हेतुः। क्वचित्पदार्थवाक्यार्थौ परस्परसापेक्षौ हेतुभावं भजतः।

यथा वा--चिकुरप्रकरा जयन्ति ते
विदुषी मूर्द्धनि यान्बिभर्ति सा।
पशुनाप्यपुरस्कृतेन त-
त्तुलनामिच्छतु चामरेण कः॥

अत्र चामरस्य दमयन्तीकुन्तलभारसाम्याभावे विदुषी मूर्द्धनि यान्बिभर्त्ति सेति वाक्यार्थः। पशुनाप्यपुरस्कृतेनेति पदार्थश्चेत्युभयं। मिलितं हेतुः क्वचित्समर्थनीयार्थसमर्थनार्थे वाक्यार्थे पदार्थो हेतुः॥

(अ०चं०)-समर्थनीयस्येति॥ समर्थनापेक्षस्यार्थस्य समर्थनं काव्यलिङ्गमलङ्कारः। अर्थान्तरन्यासवारणाय समर्थनापेक्षस्येति। यदा त्वर्थान्तरन्यासप्रकरणे वक्ष्यमाणरीत्या सामान्यविशेषभावातिरिक्तत्वं निवेश्यते तदा नोपादेयमेवैतदिति बोध्यम्। दुष्करविषयत्वात् दुष्करविषयरूपत्वात्। समर्थनापेक्षस्येत्यनन्तरमर्थस्येति शेषः॥ नैयायिकेति। नैयायिकाभिमतलिङ्गस्य लक्ष्यतावारणायेत्यर्थः॥ भस्मेति। भस्मोद्धूलनेति सम्बोधनम्। शुभमस्त्विवति शेषः। गिरिसुताकान्तस्य शिवस्यालयः प्रासादस्तदलङ्कारभूते सोपानपंक्ते इत्यपि सम्बोधनम्। हेति दैन्ये। विभुना प्रभुणा शिवेन। युष्माकं या सपर्या पूजा तत्सुखस्यालोकः प्रकाशस्तदुच्छेदके निलीयामहे। वयमित्यर्थात्॥ चिकुरेति। चिकुरप्रकराः केशपाशाः। विदुषी पंडिता। सा दमयन्ती। अपुरस्कृतेनानादृतेन पुरोभागेऽनिहितेन च। पदार्थश्चानेकपदार्थश्च॥

(कुव०)-वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे न क्वापि क्वचिदपि भवन्तं प्रणतवान्।
नमन्मुक्तः सम्प्रत्यहमतनुरग्रेप्यनतिमा-
नितीश क्षन्तव्यं तदिदमपराधद्वयमपि॥

अत्र तावदपराधद्वयं समर्थनीयम्। अस्पष्टार्थत्वात्। तत्समर्थनं च पूर्वापरजन्मनोरनमनाभ्यां वाक्यार्थभूताभ्यां

क्रियते । अत्र द्वितीयवाक्यार्थे तनुत्वमेकपदार्थो हेतुः । अत्रापि सम्प्रति नमन्मुक्त इति वाक्यार्थोऽनेकपदार्थो वा हेतुः । क्वचित्परस्परविरुद्धयोः समर्थनीययोरुभयोः क्रमादुभौ हेतुभावं भजतः ॥

( अ० चं० )–वपुरिति ॥ पुरा पूर्वस्मिन्क्वापि जन्मनि क्वचिदपि क्षणे भवन्तं न प्रणतवान् इतीदं वपुषः शरीरस्य प्रादुर्भावादनुमितम् । सम्प्रति नमन्नतिं कुर्वन्मुक्तः । अतनुरशरीरः । अतोऽहमग्रेऽप्यनतिमान्नतिरहितः । अत्रेति समर्थनीयं हेतुकथनेनोपपादनीयम् । अस्पष्टार्थत्वादस्पष्टहेतुकत्वात् । अत्रानयोर्वाक्यार्थयोर्मध्ये । द्वितीयवाक्याथ अग्रेऽप्यनतिमानिति वाक्यार्थे । अत्राप्यतनुत्वेऽपि । नमन्मुक्त इत्यस्यावाक्यत्वादाह–अनेकपदार्थो वेति ॥

( कुव० )–असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विस्रम्भेष्वथ च रसिकः शैलदुहितुः ।
प्रमोदं वो दिश्यात्कपटबटुवेषापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥

अत्र शिवस्य युगपत्कृत्रिमब्रह्मचर्यवेषापनयनत्वरातदनुवर्तनेच्छयोर्विरुद्धयोः क्रमाद्गिरिजातीव्रतपसोऽसहिष्णुत्वं तत्सल्लापकौतुकं चेत्युभावर्थौ हेतुत्वेन निबद्धौ । क्वचित्परस्परविरुद्धयोरुभयोः समर्थनीययोरेक एव हेतुः । यथा–जीयादम्बुधितनयाधररसमास्वादयन्मुरारिरयम् ।
अम्बुधिमथनक्लेशं कलयन्विफलं च सफलं च ॥

अत्र विफलत्वसफलत्वकलनयोरुभयोर्विरुद्धयोरेक एवाम्बुधितनयाधररसास्वादो हेतुः । इदं काव्यलिङ्गं हेत्वलङ्कार इति केचिद्व्याजह्रुः ॥

( अ० चं० )–असोढेति ॥ तपस्यन्तीमुमां प्रति बटुवेषेणागतस्य हरस्य वर्णनम् । कपटेन यो बटोर्ब्रह्मचारिणो वेषस्तस्यापनयने त्यागे त्वराशैथिल्याभ्यां युगपदभियुक्त आक्रान्तः । त्वराशैथिल्यहेतुगर्भ क्रमेण विशेषणद्वयमाह । तत्काले उल्लसन्प्रादुर्भवन्नसहभावो दुःसहत्वमर्थाद्गौर्या यस्य तादृशस्य तपसः असोढा सहनासमर्थः शैलकन्यायाः

कथानां विस्रम्भेषु॥ विश्वासेषु रसिकश्चेति। ब्रह्मचर्यं ब्रह्मचारिवेषः॥ जीयादिति। अम्बुधेस्तनयाया लक्ष्म्या अधररसमास्वादयन्नयं मुरारिर्जीयात्सर्वोत्कर्षेण वर्तताम्। कीदृशः। समुद्रमन्थनक्लेशमेवंविधाङ्गनालाभात्सफलं कलयन् जानन् एतदधरमाधुर्यं सत्यमृतस्य वैयर्थ्याद्विफलं च कलयन्नित्यर्थः॥

(कुव०)–हे गोदावरि देवि तावकतटोद्देशे कलिङ्गः कवि-
वाग्देवीं बहुदेशदर्शनसखीं त्यक्त्वा विरक्तिं गतः।
एनामर्णवमध्यसुप्तमुराभिन्नाभीसरोजासनं
ब्रह्माणं गमय क्षितौ कथमसावेकाकिनी स्थास्यति॥

इत्यत्र ब्रह्मणः प्रापणं कथं गोदावर्या कर्तव्यमित्यसम्भावनीयार्थोपपादकस्यार्णवमध्येत्यादितद्विशेषणस्य न्यसनं श्लेषाख्यो गुण इति "श्लेषो विघटमानार्थघटकार्थस्य वर्णनम्" इति श्लेषलक्षणमिति च जयदेवेनोक्तम्। वस्तुतस्त्वत्रापि पदार्थहेतुकं काव्यलिङ्गमेव तद्भेदकाभावात्। ननु साभिप्रायपदार्थवाक्यार्थविन्यसनरूपात्परिकरात्काव्यलिङ्गस्य किं भेदकम्। उच्यते। परिकरे पदार्थवाक्यार्थबलात्प्रतीयमानार्थौ वाच्योपस्कारकतां भजतः। काव्यलिङ्गे तु पदार्थवाक्यार्थावेव हेतुभावं भजतः। ननु यद्यपि सुखावलोकोच्छेदिनीत्यादिपदार्थहेतुककाव्यलिङ्गोदाहरणेऽग्रेऽप्यनतिमानित्यादिवाक्यार्थहेतुककाव्यलिङ्गोदाहरणे च पदार्थवाक्यार्थावेव हेतुभावं भजतस्तथापि पशुनाप्यपुरस्कृतेनेति पदार्थहेतुकोदाहरणे मच्चित्तेऽस्ति त्रिलोचन इति वाक्यार्थहेतुकोदाहरणे च प्रतीयमानार्थस्यापि हेतुकोट्यनुप्रवेशो दृश्यते। पशुनेति ह्यविवेकित्वाभिप्रायगर्भम्। विदुषीत्यस्य प्रतिनिर्देश्यत्वात्त्रिलोचन इति च कन्दर्पदाहकतृतीयलोचनत्वाभिप्रायगर्भं कन्दर्पजयोपयोगित्वात्तस्य। सत्यम्। तथापि न तयोः परिकर एव किंतु तदुत्थापितं काव्यलिङ्गमपि॥

( अ०चं० )–हे गोदावरीति ॥ अत्रार्णवमध्येत्यादिब्रह्मविशेषणस्य न्यसनं श्लेषाख्यो गुण इति जयदेवेनोक्तमित्यन्वयः । तावकतटोद्देशे त्वदीयतीरभूमौ कलिङ्गाख्यः कविर्बहूनां देशानां दर्शने सहचारिणीम् । विरक्तिं मुक्तिम् । एनां सरस्वतीं ब्रह्माणं प्रति गमय नयेति सम्बन्धः । कीदृशम्, अर्णवमध्ये सुप्तो यो मुरभिन्मुरारिस्तन्नाभिकमलस्थम् । श्लेषोऽविघटमानेत्यत्राकारप्रश्लेषः । अविघटमानस्यानुपपद्यमानस्यार्थस्य घटक उपपादको योऽर्थस्तस्य वर्णनं श्लेषाख्यो गुण इत्यर्थः । पदार्थहेतुकं समस्तपदार्थहेतुकम् । पदार्थवाक्यार्थेति द्वन्द्वः । प्रतीयमानोऽर्थो व्यङ्ग्योऽर्थः ॥ प्रतिनिर्देश्यत्वादिति । निर्दिश्यते उच्चार्यत इति निर्देशः शब्दः तेन विपरीतार्थशब्दत्वादित्यर्थः । तस्य तादृशतृतीयलोचनत्वस्य । तथा चोभयत्र परिकरालङ्कारसत्त्वात्काव्यलिङ्गोदाहरणत्वमनुपपन्नमिति भावः । तयोः पशुनेत्याद्युक्तोदाहरणयोः । तदुत्थापितं परिकरोपपादितम् । व्यङ्ग्यस्य हेतुकोटावेवानुप्रवेशादिति भावः॥

( कुव० )–प्रतीयमानाविवेकविशिष्टेन पशुनाप्यपुरस्कृतत्वस्यानेकपदार्थस्य प्रतीयमानकन्दर्पदाहकतृतीयलोचनविशिष्टस्य शिवस्य चित्ते सन्निधानस्य च वाक्यार्थस्य वाच्यस्यैव हेतुभावात् । न हि तयोर्वाच्ययोर्हेतुभावे ताभ्यां प्रतीयमानं मध्ये किञ्चिद्द्वारमस्ति । यथा सर्वाशुचिनिधानस्येत्यादिपदार्थपरिकरोदाहरणे सर्वाशुचिनिधानस्येत्यादिनानेकपदार्थेन प्रतीयमानं शरीरस्यासंरक्षणीयत्वम् । तथा च वाक्यार्थपरिकरोदाहरणे पर्यायोक्तविधया तत्तद्वाक्यार्थेन प्रतीयमानं नाहं व्यास इत्यादि तस्मात्पशुनेत्यत्र त्रिलोचन इत्यत्र च प्रतीयमानं वाच्यस्यैव पदार्थस्य वाक्यार्थस्य च हेतुभावोपपादकतया काव्यलिङ्गस्याङ्गमेव । यथा–"यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरम्" इत्यनेकवाक्यार्थहेतुककाव्यलिङ्गोदाहरणे त्वन्नेत्रसमानकान्तीत्यादिकानि इन्दीवरशशिहंसविशेषणानि तेषां वाक्यार्थानां हेतुभावोपपादकानीति तत्र वाक्यार्थहेतुककाव्यलिङ्गे पदार्थहेतुककाव्य-

लिङ्गे पदार्थहेतुकाव्यलिङ्गमङ्गमिति न तयोः काव्यलिङ्गोदाहरणत्वे काचिदनुपपत्तिः ॥ १२० ॥

( अ०चं० )-एतदेव विवृणोति-प्रतीयमानेति ॥ वाच्यस्यैवेत्येवकारसूचितं व्यङ्ग्याद्वारकत्वं न हीत्यादिना विवृतम् । तदयमर्थः । यदि पश्वादिपदव्यङ्ग्यं केशपाशसाम्याभावादेरर्थस्य साक्षादुपपादकं स्यात्तदात्र परिकर एव स्यान्न काव्यलिङ्गम् । न त्वेवमस्ति पशुपदप्रतीताविवेकित्वमात्रेण साम्याभावस्योपपादनासम्भवात् । किं तु तद्विशिष्टपशुपुरस्कृतत्वाभाव एव साक्षादुपपादक इति तत्कोटिनिविष्टं व्यङ्ग्यं काव्यलिङ्गरूपस्य तस्याङ्गमेव । व्यङ्ग्यान्तरं तु नोक्तकाव्यलिङ्गगम्यमर्थोपपादकमस्तीति निराबाधमेव काव्यलिङ्गमिति । ननु स्वयमन्योपपादकस्य काव्यलिङ्गस्याप्युपपादकं क्व दृष्टमित्याशङ्क्योदाहरति-यत्त्वन्नेत्रेति ॥ एतत्प्रतीपालङ्कारे प्रागुदाहृतम् ॥ अनेकवाक्यार्थहेतुकेति। पूर्वपादत्रयवाक्यार्थत्रयस्य चतुर्थपादार्थे हेतुत्वमिति ज्ञेयम् ॥ हेतुभावोपपादकानीति । इन्दीवरस्य नेत्रसमानकान्तित्वं विना पटादेरिव तददर्शनस्य दैवगतकान्तासादृश्यविनोदासहिष्णुत्वे हेतुत्वासम्भवादिति भावः । समाहितमर्थमुपसंहरति--इतीति । तयोः पशुनापीति मच्चित्तेऽस्तीत्येतयोः ॥ १२० ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां काव्यलिङ्गालङ्कारप्रकरणम् ॥ ६० ॥

---

## अर्थान्तरन्यासालङ्कारः ६१.

(चं०)-उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः ॥
हनूमानब्धिमतरद्दुष्करं किं महात्मनाम् ॥ १२१ ॥
गुणवद्वस्तुसंसर्गाद्याति स्वल्पोऽपि गौरवम् ।
पुष्पमालानुषङ्गेण सूत्रं शिरसि धार्यते ॥ १२२ ॥

( कुव० )-सामान्यविशेषयोर्द्वयोरप्युक्तिरर्थान्तरन्यासस्तयोश्चैकं प्रस्तुतमन्यदप्रस्तुतं भवति ततश्च विशेषे प्रस्तुते तेन सहाप्रस्तुतसामान्यरूपस्य सामान्ये प्रस्तुते तेन सहाप्रस्तुतविशेषरूपस्यार्थान्तरस्य न्यसनमर्थान्तरन्यास

इत्युक्तं भवति । तत्राद्यस्य द्वितीयार्द्धमुदाहरणं द्वितीयस्य द्वितीयश्लोकः । नन्वयं काव्यलिङ्गान्नातिरिच्यते । तथाहि उदाहरणद्वयेऽप्यप्रस्तुतयोः सामान्यविशेषयोरुक्तिः प्रस्तुतयोर्विशेषसामान्ययोः कथमुपकरोतीति विवेक्तव्यम् । न हि सर्वथैव प्रस्तुतानन्वय्यप्रस्तुताभिधानं युज्यते । न तावदप्रस्तुतप्रशंसायामिव प्रस्तुतव्यञ्जकतया प्रस्तुतयोरपि विशेषसामान्ययोः स्वशब्दोपात्तत्वान्नाप्यनुमानालङ्कार इव प्रस्तुतप्रतीतिजनकतया तद्वदिह व्याप्तिपक्षधर्मताद्यभावात् । नापि दृष्टान्तालङ्कार इव उपमानतया,

"विस्रब्धघातदोषः स्ववधाय खलस्य वीर कोपकरः ।
नवतरुभङ्गध्वनिरिव हरिनिद्रातस्करः करिणः ॥"

इत्यादिषु सामान्ये विशेषस्योपमानत्वदर्शनेऽपि विशेषे सामान्यस्य क्वचिदपि तददर्शनात् । उपमानतया तदन्वये सामंजस्याप्रतीतेश्च । तस्मात्प्रस्तुतसमर्थकतयैवाप्रस्तुतस्योपयोग इहापि वक्तव्यः । ततश्च वाक्यार्थहेतुकं काव्यलिङ्गमेवात्रापि स्यान्न त्वलङ्कारान्तरस्यावकाश इति चेत् । अत्र केचित्, समर्थनसापेक्षस्यार्थस्य समर्थने काव्यलिङ्गं निरपेक्षस्यापि प्रतीतिवैभवात्समर्थनेऽर्थान्तरन्यासः ॥

( अ०चं० )–प्रस्तुतव्यञ्जकतयेति ॥ अप्रस्तुताभिधानं युज्यत इत्यनुषज्यते । एवमग्रेऽपि ॥ विस्रब्धेति । खलस्य विश्वस्तघातरूपो दोषः स्वस्यैव वधाय भवति यतो वीराणां कोपकारकः । सिंहनिद्रापहारी नवतरुभङ्गजन्यध्वनिः करिणो वधाय यथेत्यर्थः । तददर्शनादुपमानत्वादर्शनात् । ननु महापुरुषाकृतिरिव गम्भीरेयमस्याकृतिरित्यादौ सामान्यस्याप्युपमानता दृष्टेत्यरुचेराह–उपमानेति ॥ इवाद्यभावात्तात्पर्याभावाच्चोपमानतयाऽन्वयस्य सामञ्जस्येनाप्रतीतेरित्यर्थः । इहापीत्यपिना काव्यलिङ्गसमुच्चयः । प्रतीतिवैभवात्प्रतीतिदार्ढ्यरूपप्रयोजनवशात् । प्रयोजनस्यापि हेतुत्वविवक्षया पञ्चमी ॥

न हि यत्त्वन्नेत्रसमानकान्तीत्यादिकाव्यलिङ्गोदाहरणेष्विव

"अथोपगूढे शरदा शशाङ्के
प्रावृड्ययौ शान्ततडित्कटाक्षा ।
कासां न सौभाग्यगुणोऽङ्गनानां
नष्टः परिभ्रष्टपयोधराणाम् ॥
दिवाकराद्रक्षति यो गुहासु
लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने
ममत्वमुच्चैः शिरसामतीव ॥"

इत्याद्यर्थान्तरन्यासोदाहरणेषु प्रस्तुतस्य समर्थनापेक्षत्वमस्तीति । वस्तुतस्तु प्रायोवादोऽयम् । अर्थान्तरन्यासेऽपि हि विशेषस्य सामान्येन समर्थनानपेक्षत्वेऽपि सामान्यं विशेषेण समर्थनमपेक्षत एव निर्विशेषं न सामान्यमिति न्यायेन "बहूनामप्यसाराणां संयोगः कार्यसाधकः ।" इत्यादि सामान्यस्य "तृणैरारभ्यते रज्जुस्तया नागोऽपि बध्यते ।" इत्यादि सम्प्रतिपन्नविशेषावतरणं विना बुद्धौ प्रतिष्ठितत्वासम्भवात् ॥

( अ०चं० )–उक्तवैलक्षण्यमुदाहरणनिष्ठतया दर्शयति–न हीत्यादि काव्यलिङ्गोदाहरणेष्विवेति ॥ अथेति । अथेत्याद्यर्थान्तरन्यासोदाहरणेषु प्रस्तुतस्य समर्थनार्थित्वं नह्यस्तीति सम्बन्धः । शरदा शशाङ्के उपगूढे आलिङ्गिते सति । अथानन्तरम् । शान्तास्तडिद्रूपाः कटाक्षा यस्याः सा प्रावृट् ययौ गतवती । उक्तं विशेषरूपमर्थं सामान्यरूपेणार्थान्तरेण समर्थयति । परिभ्रष्टपयोधराणां कासामङ्गनानां सौभाग्यगुणो न नष्ट इति । पयोधराः कुचा मेघाश्च ॥ दिवाकरादिति । कुमारसम्भवे हिमालयवर्णनम् । यो हिमालयः । ममत्वं मदीयताबुद्धिः । शिरो मस्तकं शिखरं च । समर्थनार्थित्वं समर्थनापेक्षत्वम् । अयमर्थान्तरन्यासे समर्थनानपेक्षत्वरूपः । सामान्यस्येत्यस्य बुद्धौ प्रतिष्ठितत्वासम्भवादित्यनेनान्वयः ॥

( कुव० )–न च तत्र सामान्यस्य कासां न सौभाग्यगुणोऽङ्ग-

नानामित्यादिविशेषसमर्थनार्थसामान्यस्यैव लोकसम्प्रतिपन्नतया विशेषावतरणं विनैव बुद्धौ प्रतिष्ठितत्वं सम्भवतीति श्लोके तन्न्यसनं नापेक्षितमस्तीति वाच्यम्। सामान्यस्य सर्वत्र लोकसम्प्रतिपन्नत्वनियमाभावात्। न हि यो यो धूमवान् स सोऽग्निमानिति व्याप्तिरूपसामान्यस्य लोकसंप्रतिपन्नतया यथा महानस इति तद्विशेषरूपदृष्टान्तानुपादानसम्भवमात्रेणाप्रसिद्धव्याप्तिरूपसामान्योपन्यासेऽपि तद्विशेषरूपदृष्टान्तोपन्यासनैरपेक्ष्यं सम्भवति। न चैवं सामान्येन विशेषसमर्थनस्थलेऽपि क्वचित्तस्य सामान्यस्य लोकप्रसिद्धत्वाभावेन तस्य बुद्धावारोहाय पुनर्विशेषान्तरस्य न्यासप्रसङ्ग इति वाच्यम्। इष्टापत्तेः। अत्रैव विषये विकस्वरालंकारस्यानुपदमेव दर्शयिष्यमाणत्वात्। किं च, काव्यलिङ्गेऽपि न सर्वत्र समर्थनसापेक्षत्वनियमः। चिकुरप्रकरा जयन्ति ते इत्यत्र तदभावादुपमानवस्तुषु वर्णनीयसाम्याभावेन निन्दायाः कविकुलक्षुण्णत्वेनाऽत्र समर्थनापेक्षाविरहात्। न हि " तदास्यदास्येऽपि गतोऽधिकारितां न शारदः पार्वणशर्वरीश्वरः " इत्यादिषु समर्थनं दृश्यते।

" न विषेण न शस्त्रेण नाग्निना न च मृत्युना।
अप्रतीकारपारुष्याः स्त्रीभिरेव स्त्रियः कृताः॥"

इत्यादिकाव्यलिङ्गविषयेषु समर्थनापेक्षाविरहेऽप्यप्रतीकारपारुष्या इत्यादिना समर्थनदर्शनाच्च। न हि तत्र स्त्रीणां विषादिनिर्मितत्वाभावप्रतिपादनसमर्थनसापेक्षं प्रसिद्धत्वात्। तस्मादुभयतो व्यभिचारात्समर्थनापेक्षसमर्थने काव्यलिङ्गं तन्निरपेक्षसमर्थनेऽर्थान्तरन्यास इति न विभागः किं तु सामर्थ्यसमर्थकयोः सामान्यविशेषसम्बन्धेऽर्थान्तरन्यासस्तदितरसम्बन्धे काव्यलिङ्गमित्येव व्यवस्थावधारणीया। प्रपञ्चश्चित्रमीमांसायां द्रष्टव्यः॥

( अ०चं० )-सम्प्रतिपन्नेति ॥ वक्तृश्रोतृसम्मतेत्यर्थः । विशेषावतरणं विशेषावगमम् । तत्र बहूनामित्यादौ सामान्यस्येति विशेषावतरणं विनैव बुद्धौ प्रतिष्ठितत्वं सम्भवतीत्यग्रिमेणान्वितम् । तन्न्यसनं तृणैरित्यादिविशेषन्यसनम् । नन्वेवमप्यर्थान्तरन्यासे क्वचिदेव समर्थनापेक्षा, काव्यलिङ्गे तु सर्वत्र सेत्यस्तु भेद इत्याशङ्क्याह-किञ्चेति ॥ कविकुलक्षुण्णत्वेन कविसमूहाभ्यस्तत्वेन । तदास्यदास्ये नलमुखदास्ये। पर्वणि पूर्णिमायां भवः पार्वणः शर्वरीश्वरश्चन्द्रः । न विषेणेत्यादेः स्त्रियः कृता इत्यनेनान्वयोऽपि तु स्त्रीभिरेव । यतः प्रतीकाररहितं पारुष्यं क्रौर्यं यासां तथाभूताः । उभयतोन्वयव्यतिरेकाभ्याम् । समर्थनापेक्षायामपि तदास्यदास्येपीत्यादौ तदभावात् । न विषेणेत्यादावपेक्षाविरहेऽपिसमर्थनसत्त्वात् ॥

( कुव० )-एवमप्रकृतेन प्रकृतसमर्थनमुदाहृतम् । प्रकृतेनाप्रकृतसमर्थनं यथा-

यदुच्यते पार्वति पापवृत्तये
न रूपमित्यव्यभिचारि तद्वचः ।
तथा हि ते शीलमुदारदर्शने
तपस्विनामप्युपदेशतां गतम् ॥

यथा वा-दानं ददत्यपि जलैः सहसाधिरूढे
को विद्यमानगतिरासितुमुत्सहेत ।
यद्दन्तिनः कटकटाहतटान्मिमंक्षोर्मंक्षूदपाति परितः पटलैरलीनाम् ॥ १२१ ॥ १२२ ॥

( अ० चं० )-अप्रकृतेनेति ॥ आद्ये महात्मनां सर्वसुकरत्वेनाप्रकृतेन सामान्येन हनुमदब्धितरणस्य प्रकृतविशेषस्य समर्थनं द्वितीये पुष्पमालासूत्रवृत्तान्तेनाप्रकृतेन विशेषरूपेण प्रकृतस्य गुणवत्सङ्गप्रयुक्तपूज्यत्वस्य सामान्यरूपस्य समर्थनमित्यर्थः ॥ यदुच्यत इति । हे पार्वति रूपमाकृतिसौंदर्यं पापवृत्तये दुष्टाचरणाय न भवति यत्राकृतिस्तत्र गुणा वसन्तीति न्यायादिति यदुच्यते तद्वचनमव्यभिचारि यथार्थम् । तथाहि उदारं रमणीयं दर्शनं यस्यास्तथाभूते पार्वति तव शीलमाचरणं तपस्विनामप्युपदेशरूपतां प्राप्तमिति प्रकृतेन विशेषेणाप्रकृतस्य सामान्यस्य समर्थनम् ॥ दानमिति । दानं वितरणं मदजलं च । जलैर्जडैश्च । लडयोरभेदात् । अधिरूढे आक्रान्ते सति । विद्यमान[illegible] सन्

तिको बुद्धिमांश्च क आसितुं स्थातुमुत्सहेत शक्नुयात् । यस्मान्निमं-क्षोर्मज्जनं कर्तुमिच्छोर्दन्तिनो गजस्य कटो गण्ड एव कटाहस्तस्य तटादग्रादलीनां पटलैः समूहैः परितो मंक्षु शीघ्रमुदपाति उत्पतितमित्यन्वयः । अत्रापि पूर्वार्द्धोक्तमप्रकृतसामान्यमुत्तरार्द्धोक्तेन प्रकृतेन विशेषेण समर्थितम् ॥ १२१ ॥ १२२ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायामर्थान्तरन्यासालङ्कारप्रकरणम् ॥ ६१ ॥

---

## विकस्वरालङ्कारः ६२.

**(चं०)—यस्मिन्विशेषसामान्यविशेषाः स विकस्वरः ।**
**स न जिग्ये महान्तो हि दुर्द्धर्षाः सागरा इव ॥१२३॥**

(कुवल० )—यत्र कस्याचिद्विशेषस्य समर्थनार्थं सामान्यं विन्यस्य तत्प्रसिद्धावप्यपरितुष्यता कविना तत्समर्थनाय पुनर्विशेषान्तरमुपमानरीत्यार्थान्तरन्यासविधया वा विन्यस्यते तत्र विकस्वरालङ्कारः । उत्तरार्द्धं यथा कथंचिदुदाहरणम् । इदं तु व्यक्तमुदाहरणम्—

अनन्तरत्नप्रभवस्य यस्य
हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ॥

इदमुपमानरीत्या विशेषान्तरस्य न्यसने उदाहरणम् ॥

( अ०चं० )—यस्मिन्निति ॥ यस्मिन्काव्ये इत्यर्थात् । निबध्यत इति शेषः । समर्थ्यसमर्थकभावापन्नत्वं तु न लक्षणे निवेशनीयम् । तद्विना चमत्काराभावेन चमत्कारित्वविशेषणमवश्यवक्तव्यैनैवानतिप्रसङ्गात् । एवमर्थान्तरन्यासलक्षणेऽपि बोध्यम् ॥ स नेति । स प्रकृतो राजा न जिग्ये न जितोऽर्थात्परैरिति शेषः । तत्समर्थनं महान्तो हि दुर्धर्षा अनाक्रमणीया इति सामान्येन तस्यापि सागरा इवेति विशेषोपमेयेति ज्ञेयम् । प्रसिद्धेरल्पत्वात्तत्रापरितोषो बोध्यः ॥ यथा कथञ्चिदिति । [illegible]मनाक्रमणीयत्वस्यातिप्रसिद्धत्वेन तत्समर्थनापेक्षाभावाच्चन्द्रलोक[illegible]तन्न समञ्जसमिति भावः । इदं वक्ष्यमाणम ॥ व्यक्तमिति ।

गुणसमुदाये एकस्य दोषस्यानाकलनमनतिप्रसिद्धतया समर्थनापेक्षमिन्दोरित्यादिविशेषेण समर्थ्यत इत्यतः स्फुटमित्यर्थः ॥

( कुव० )-अर्थान्तरन्यासविधया यथा-

कर्णारुन्तुदमन्तरेण रणितं गाहस्व काक स्वयं
माकन्दं मकरन्दशालिनमिह त्वां मन्महे कोकिलम् ।
धन्यानि स्थलवैभवेन कतिचिद्वस्तूनि कस्तूरिकां
नेपालक्षितिपालभालपतिते पङ्के न शङ्केत कः ॥
मालिन्यमब्जशशिनोर्मधुलिट्कलङ्कौ
धत्तो मुखे तु तव दृक्तिलकाञ्जनाभाम् ।
दोषावितः क्वचन मेलनतो गुणत्वं
वक्तुर्गुणौ हि वचसि भ्रमविप्रलम्भौ ॥ १२३ ॥

( अ० चं० )-कर्णेति ॥ हे काक कर्णयोररुन्तुदं पीडाजनकं रणितं शब्दितमन्तरेण विना स्वयं मकरन्दः पुष्परसस्तच्छालिनं माकन्दमाम्रवृक्षं गाहस्व आश्रय इहाम्रतरौ त्वां वयं कोकिलं मन्महे जानीमहे । यतः स्थलवैभवेन स्थानमाहात्म्येन कतिचिद्वस्तूनि धन्यानि भवन्तीति सामान्येन पूर्वोक्तिविशेषसमर्थनम् । अत्रापि तदाकांक्षायां विशेषरूपमर्थान्तरं न्यसति--नेपालभूमिपालस्य भाले पतिते पङ्के कस्तूरिकां को न शङ्केतापि तु सर्व इति ॥ मालिन्यमिति । मधुलिट् भ्रमरः कलङ्कश्चैतावब्जशशिनोर्मालिन्यं धत्तः कुरुतः तव मुखे तु दृक् च तिलकाञ्जनं च तयोराभां शोभां धत्त इत्यनुषज्यते । अञ्जनाभे इति पाठे द्वितीयाद्विवचनम् । उक्तमर्थं सामान्येन समर्थयति--दोषावपि क्वचित् मेलनतो मिथो मेलनात् गुणत्वमितः प्राप्नुत इति । कथमेतत्तत्राह । हि यतः वक्तुर्वचसि भ्रमविप्रलम्भौ भ्रान्तिप्रतारणे गुणौ भवतः । घटवति घटाभावं निर्णीय परप्रतारणाय घटोऽस्तीति प्रयुक्ते वाक्ये प्रमाजनकत्वात्तयोर्गुणत्वमिति भावः ॥ १२३ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां विकस्वरालङ्कारप्रकरणम् ॥ ६२ ॥

---

## प्रौढोक्त्यलङ्कारः ६३.

( चंद्रा० )-प्रौढोक्तिरुत्कर्षाहेतौ तद्धेतुत्वप्रकल्पनम् ।
कचाः कलिन्दजातीरतमालस्तोममेचकाः ॥ १२४ ॥

( कुव० )-कार्यातिशयाहेतौ तद्धेतुत्वप्रकल्पनं प्रौढोक्तिः । यथा तमालगतनैल्यातिशयाहेतौ यमुनातटरोहणे तद्धेतुत्वप्रकल्पनम् ।

यथा वा-कल्पतरुकामदोग्ध्रीचिन्तामणिधनदशंखानाम् ।
रचितो रजोभरपयस्तेजःश्वासान्तराम्बरैरेषः ॥

अत्र कल्पवृक्षाद्येकैकवितरणातिशायिवर्णनीयराजवितरणातिशयाहेतौ कल्पवृक्षपरागादिरूपपञ्चभूतनिर्मितत्वेन तद्धेतुत्वप्रकल्पनं प्रौढोक्तिः ॥ १२४ ॥

( अ०चं० )-प्रौढोक्तिरिति ॥ उत्कर्षस्याहेतावुत्कर्षहेतुत्वकल्पनं प्रौढोक्तिः। कलिन्दजा यमुना । स्तोमः समूहः । मेचकाः श्यामाः । रोहणे उद्भवे ॥ कल्पेति । एष राजा कल्पवृक्षादीनां क्रमेण रजोभरादिभिः पञ्चभी रचित इत्यन्वयः । धनदः कुबेरः । शंखो निधिविशेषः । रजोभरः परागसमूहः । पयो दुग्धम् । श्वासः प्रसिद्धः । अन्तराम्बरं शंखाभ्यन्तरमाकाशम् । अतिशायीत्यग्रिमवितरणेनान्वितम् । अहेतौ पञ्चनिर्मितत्वे इति सामानाधिकरण्येनान्वयः ॥ १२४ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां प्रौढोक्त्यलङ्कारप्रकरणम् ॥ ६३ ॥

---

## सम्भावनालंकारः ६४.

(चं०)-सम्भावना यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये।
यदि शेषो भवेद्वक्ता कथिताः स्युर्गुणास्तव॥१२५॥

यथा वा-
कस्तूरिकामृगाणामण्डाद्गन्धगुणमखिलमादाय ।
यदि पुनरहं विधिः स्यां खलजिह्वायां निवेशयिष्यामि ॥

यद्यर्थोक्तौ च कल्पनमतिशयोक्तिभेद इति काव्यप्रकाशकारः ॥ १२९ ॥

(अ०चं०)-सम्भावनेति ॥ ऊहस्तर्कः ॥ कस्तूरिकेति । अहं यदि सृष्टिकर्त्ता स्यां तदा कस्तूरिकामृगाणामण्डादखिलं गन्धरूपं गुणमादाय खलजिह्वायां निवेशयिष्यामीत्यन्वयः ॥ १२५ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां सम्भावनालङ्कारप्रकरणम् ॥ ६४ ॥

---

## मिथ्याध्यवसित्यलङ्कारः ६५.

(चं)-किञ्चिन्मिथ्यात्वसिद्ध्यर्थं मिथ्यार्थान्तरकल्पनम्
मिथ्याध्यवसितिर्वेश्यां वशयेत्खस्रजं वहन्॥१२६॥

(कुव०)-अत्र वेश्यावशीकरणस्यात्यन्तासम्भावितत्वसिद्ध्ये गगनकुसुममालिकाधारणरूपार्थान्तरकल्पनं मिथ्याध्यवसितिः ॥ यथा वा-

अस्य क्षोणिपतेः परार्द्धपरया लक्ष्मीकृताः सङ्ख्यया
प्रज्ञाचक्षुरवेक्ष्यमाणबधिरश्राव्याः किलाकीर्तयः।
गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदरा-
न्मूकानां प्रकरेण कूर्मरमणीदुग्धोदधे रोधसि ॥

अत्राद्योदाहरणं निदर्शनागर्भं द्वितीयं तु शुद्धम्। असम्बन्धे सम्बन्धरूपातिशयोक्तितो मिथ्याध्यवसितेः किञ्चिन्मिथ्यात्वसिद्ध्यर्थं मिथ्यार्थान्तरकल्पनात्मना विच्छित्तिविशेषेण भेदः ॥ १२६ ॥

(अ०चं०)-किञ्चिदिति ॥ कस्यचिदर्थस्य मिथ्यात्वसिद्ध्यर्थं मिथ्याभूतार्थान्तरकल्पनं मिथ्याध्यवसितिरलङ्कारः । वेश्यामित्युदाहरणम् । खस्रजं गगनमालाम् । अत्र खपुष्पमालाधारणमिव वेश्यावशीकरणमिति निदर्शनापि बोध्या ॥ अस्येति । परार्द्धपरया परार्द्धसंख्यामतिक्रान्तया । लक्षीकृता उपलक्षिताः । प्रज्ञाचक्षुषा अन्धेनावेक्ष्यमाणाश्च ता बधिरश्राव्याश्चेति कर्मधारयः । कलयता कुर्वता । प्रकरेण समूहेन । कूर्मरमणी कच्छपी । रोधसि तीरे । मिथ्याध्यवसितेरित्यस्य भेद इत्यत्रान्वयः । कल्पनाविच्छित्तिविशेषेण कल्पनाप्रयुक्तविच्छित्तिविशेषेण । कल्पनात्मनेति पाठे कल्पनास्वरूपेणेत्यर्थः । उपधेयसङ्करेऽप्युपा-

धेरसङ्करात् । विच्छित्तिविशेषणेति च तस्यैव विशेषणम् । विच्छित्तेर्विशेषो यस्मादिति, विच्छित्तिं विशेषयति व्यावर्तयतीति वा व्युत्पत्तेः । एतेन प्रौढोक्त्यैव गतार्थतामाचक्षाणा निरस्ता वेदितव्याः । न च मिथ्याध्यवसितेरलङ्कारान्तरत्वे "हरिश्चन्द्रेण सञ्जप्ताः प्रगीता धर्मसूनुना । खेलन्ति निगमोत्सङ्गे मातर्गङ्गे गुणास्तव ॥" इत्यादौ हरिश्चन्द्रादिसम्बन्धाद्गुणानां सत्यताप्रतीतेः । सत्याध्यवसितिरपि तथा स्यादिति वाच्यम् । सत्यताप्रतीत्यर्थं कस्याप्यर्थस्य कविप्रतिभाकल्पितत्वाभावेन शब्दमात्रेणालङ्कारतााया असम्भवात् । कविप्रतिभामात्रकल्पिता अर्थाः । काव्ये अलङ्कारपदास्पदमिति विषमालङ्कारप्रकरणे त्वयैवाभिधानादित्यलं विस्तरेण ॥ १२६ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां मिथ्याध्यवसित्यलङ्कारप्रकरणम् ॥ ६५ ॥

---

## ललितालङ्कारः ६६.

( चं० )-वर्ण्ये स्याद्वर्ण्यवृत्तान्तप्रतिबिम्बस्य वर्णनम् ।
ललितं निर्गते नीरे सेतुमेषा चिकीर्षति ॥ १२७ ॥

(कुव०)-प्रस्तुते धर्मिणि यो वर्णनीयो वृत्तान्तस्तमवर्णयित्वा तत्रैव तत्प्रतिबिम्बरूपस्य कस्यचिदप्रस्तुतवृत्तान्तस्य वर्णनं ललितम् । यथाकथञ्चिद्दाक्षिण्यसमागततत्कालोपेक्षितप्रतिनिवृत्तनायिकान्तरासक्तनायकानयनार्थं सखीं प्रेषयितुकामां नायिकामुद्दिश्य सख्या वचनेन तद्व्यापारप्रतिबिम्बभूतगतजलसेतुबन्धवर्णनम् । नेयमप्रस्तुतप्रशंसा प्रस्तुतधर्मिकत्वात्, नापि समासोक्तिः प्रस्तुतवृत्तान्ते वर्ण्यमाने विशेषणसाधारण्येन सारूप्येण वाऽप्रस्तुतवृत्तान्तस्फूर्त्यभावात्, अप्रस्तुतवृत्तान्तादेव सरूपादिह प्रस्तुतवृत्तान्तस्य गम्यत्वात्, नापि निदर्शना प्रस्तुताप्रस्तुतवृत्तान्तयोः शब्दोपात्तयोरैक्यसमारोप एव तस्याः समुन्मेषात् । यदि विषयविषयिणोः शब्दोपात्तयोः प्रवर्तमान एवालङ्कारो विषयिमात्रोपादानेऽपि स्यात्तदा रूप-

कमेव भेदेऽप्यभेदरूपाया अतिशयोक्तेरपि विषयमाक्रामेत् । ननु तर्ह्यत्र प्रस्तुतनायकादिनिगरणेन तत्र शब्दोपात्ताप्रस्तुतनीराद्यभेदाध्यवसाय इति भेदे अभेदरूपातिशयोक्तिरस्तु । एवं तर्हि सारूप्यनिबन्धना अप्रस्तुतप्रशंसाविषयेऽपि सैवातिशयोक्तिः स्यात् ।

( अ०चं० )–प्रस्तुत इति ॥ ललितमिति लक्ष्यनिर्देशः । निर्गत इत्युदाहरणम् । दाक्षिण्येत्यादिक्तप्रत्ययान्तचतुष्टयं नायकविशेषणम् । दाक्षिण्यमनुरोधशीलत्वम् ॥ तद्व्यापारेति । सखीप्रेषणरूपनायिकाव्यापारस्वरूपेत्यर्थः । सारूप्यं चात्र नैरर्थक्यम् । कल्पितालङ्कारेष्वन्तर्भावमाशङ्क्य निराकरोति–नेयमित्यादिना ॥ प्रस्तुताप्रस्तुतेति । तथा च प्रकृतेऽप्रस्तुतवृत्तान्तस्यैवोपादानान्निदर्शना न युक्तेति भावः । ननूभयोः शब्दोपात्तत्व इवाप्रस्तुतमात्रस्य तत्त्वेऽपि निदर्शनास्त्वित्याशङ्क्याह–यदिति ॥ प्रतिबन्द्या तावत्परिहरति–तर्हि सारूप्येति ॥ "एकः कृती शकुन्तेषु योऽन्यं शक्रान्न याचते ।" इत्यादावित्यर्थः ॥

( कुव० )–अप्रस्तुतधर्मिकत्वान्न भवतीति चेत् । तत्राप्यप्रस्तुतधर्मिवाचकपदस्यापि प्रसिद्धातिशयोक्त्युदाहरणेष्विव प्रस्तुतधर्मिलक्षकत्वसम्भवात् । नन्वप्रस्तुतप्रशंसायां सरूपादप्रस्तुतवाक्यार्थात्प्रस्तुतवाक्यार्थोऽवगम्यते न त्वतिशयोक्ताविव विषयवाचकैस्तत्तत्पदैर्विषया लक्ष्यन्त इति भेद इति चेत्तर्हि इहापि प्रस्तुतगतादप्रस्तुतवृत्तान्तरूपाद्वाक्यार्थात्तद्गतप्रस्तुतवृत्तान्तरूपो वाक्यार्थोऽवगम्यत इत्येवातिशयोक्तितो भेदोऽस्तु ।

( अ०चं० )–अप्रस्तुतेति ॥ अप्रस्तुतस्य शकुन्तादेस्तत्र वर्णनीयत्वादतिशयोक्तिस्थले च वापी कापीत्यादौ वापीत्वादिना प्रस्तुतनाभ्यादेर्वर्ण्यत्वातिशयोक्तिस्तत्रापादयितुं शक्येति भावः । अप्रसिद्धोऽयं हेतुरित्याह–तत्रेति ॥ प्रसिद्धेति । वापी कापीत्यादिसर्वसम्मतेत्यर्थः ॥ तद्गतेति । प्रस्तुतगतेत्यर्थः ।

( कुव० )–वस्तुतस्तु–

"सोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं
दृष्टिः सा मदविस्मृतस्वपरदिक्किं भूयसोक्तेन वा ।

पूर्वं निश्चितवानसि भ्रमर हे यद्वारणोऽद्याप्यसा-
वन्तः शून्यकरो निषेव्यत इति भ्रातः क एष ग्रहः ॥"

इत्याद्यप्रस्तुतप्रशंसोदाहरणे प्रथमप्रतीतादप्रस्तुतवाक्यार्थात्प्रस्तुतवाक्यार्थोऽवगम्यत इत्येतन्न घटते । अप्रस्तुते वारणस्य भ्रमरासेव्यत्वे कर्णचापलमात्रस्य भ्रमरनिराकरणहेतुत्वसम्भवेऽपि रसनाविपर्ययान्तःशून्यकरत्वयोर्हेतुत्वासम्भवेन मदस्य प्रत्युत तत्सेव्यत्व एव हेतुत्वेन च रसनाविपर्ययादीनां तत्र हेतुत्वान्वयार्थं वारणपदस्य दुष्प्रभुरूपविषयक्रोडीकारेणैव प्रवृत्तेर्वक्तव्यत्वात् । एवं सत्यपि यद्यप्रस्तुतसम्बोधनादिविच्छित्तिविशेषात्तत्राप्रस्तुतप्रशंसाया अतिशयोक्तितो भेदो घटते । तदात्रापि प्रस्तुतं धर्मिणं स्वपदेन निर्दिश्य तत्राप्रस्तुतवर्णनारूपस्य विच्छित्तिविशेषस्य सद्भावात्ततो भेदः सुतरां घटते ॥

( अ०चं० )–अप्रस्तुतप्रशंसायां क्वचित्प्रस्तुतयोरभेदाध्यवसानमप्यप्रस्तुतवाक्यार्थप्रतीतिकाले दृश्यते । ललिते तु न क्वापीति सुतरामतिशयोक्तितो भेद इत्याह–सोऽपूर्व इत्यादिना ॥ रसनाविपर्ययः अग्निशापात्करिणां जिह्वापरिवृत्तिः । पूर्व विपरीताभिधानं च कर्णचापलं प्रसिद्धं पिशुनप्रतार्यत्वं च । मदः प्रसिद्धः गर्वश्च । तेन विस्मृता स्वपरयोर्दिङ्मार्ग आत्मानात्मविभागश्च यया सा दृष्टिः वारणो गजो वारकश्च । शून्यः सरन्ध्रो धनरहितश्च । करः शुण्डा हस्तश्च । ग्रह आग्रहः । कुतो न घटते तत्राह–अप्रस्तुत इति ॥ एतच्च भ्रमरासेव्यत्व इत्यस्य विशेषणम् । भ्रमरनिरासकरणस्येति च कर्णचापलमात्रस्येत्यस्य क्रोडीकरः । स्वार्थेन सममभेदाध्यवसायः । अप्रस्तुतसम्बोधनादिति । आदिना सारूप्यनिबन्धनप्रस्तुतवाक्यार्थावगतिपरिग्रहः । अत्रापि ललितालङ्कारेऽपि ॥ वर्णनारूपस्येति । चमत्कारितारूपाया विच्छित्तेस्तदवच्छेदकवर्णनारूपत्वमित्यभिप्रायः ॥

( कुव० )–"पश्य नीलोत्पलद्वन्द्वान्निस्सरन्ति", "वापी कापि स्फुरति गगने तत्परं सूक्ष्मपद्या" इत्यादिषु तु प्रस्तुतस्य कस्यचिद्धर्मिणः स्ववाचकेनानिर्दिष्टत्वादति-

शयोक्तिरेव । एतेन जलगतसेतुबन्धवर्णनादिष्वसम्बन्धे सम्बन्धातिशयोक्तिरस्त्विति शङ्कापि निरस्ता । तथा सति कस्त्वम्भोः कथयामीत्यादावपि तत्प्रसङ्गात्सारूप्यनिबन्धनप्रस्तुतवाक्यार्थावगतिरूपविच्छित्तिविशेषालङ्कारान्तरकल्पनं त्विहापि तुल्यम् । तस्मात्सर्वालङ्कारविलक्षणमिदं ललितम् ।

यथा वा—क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥

अत्रापि निदर्शनाभ्रान्तिर्न कार्या । अल्पविषयया मत्या सूर्यवंशं वर्णयितुमिच्छुरहमिति प्रस्तुतवृत्तान्तानुपन्यासात्तत्प्रतिबिम्बभूतस्य उडुपेन सागरं तितीर्षुरस्मीत्यप्रस्तुतवृत्तान्तस्य वर्णनेनादौ विषमालङ्कारविन्यसनेन च केवलं तत्र तात्पर्यस्य गम्यमानत्वात् ॥

( अ०चं० )—कस्यचिन्नेत्रद्वन्द्वादेः । स्ववाचकेन नेत्रादिपदेन । अनिर्दिष्टत्वादप्रतिपादितत्वात् ॥ अतिशयोक्तिरस्तीति । अतिशयोक्तिरेवास्तीत्यर्थः । तत्प्रसङ्गात् सम्बोध्यत्वोच्चारयितृत्वयोरसम्बन्धेऽपि सम्बन्धवर्णनादतिशयोक्तिमात्रप्रसङ्गात् । अलङ्कारान्तरं कस्त्वमित्यादावप्रस्तुतप्रशंसा प्रकृते तु ललितमिति ॥ तत्प्रतिबिम्बेति । प्रस्तुतार्थप्रतिबिम्बरूपस्याप्रस्तुतार्थस्येत्यर्थः । आदौ पूर्वार्द्धे ॥ विषमेति । स्वमतिसूर्यवंशयोरत्यन्ताननुरूपत्वरूपेत्यर्थः । तात्पर्यस्य तादृशमतिकरणकसूर्यवंशवर्णनेच्छाभिप्रायस्य ॥

( कुव० )—यथा वा—अनायि देशः कतमस्त्वयाद्य
वसन्तमुक्तस्य दशां वनस्य ।
त्वदाप्तसङ्केततया कृतार्था
श्राव्यापि नानेन जनेन संज्ञा ॥

अत्र कतमो देशस्त्वया परित्यक्त इति प्रस्तुतार्थमनुपन्यस्य वसन्तमुक्तस्य वनस्य दशामनायीति तत्प्रतिबिम्बभूतार्थमात्रोपन्यासाल्ललितालङ्कारः ॥ १२७ ॥

( अ०चं० )–अनायीति । नलं प्रति दमयन्त्या उक्तिः । हे नल अद्य त्वया कतमो देशो वसन्तमुक्तस्य वनस्य दशामनायि प्रापितः । त्वयि प्राप्तसङ्केततया कृतार्था संज्ञा नामाप्यनेन मल्लक्षणेन जनेन न श्राव्या न श्रवणार्हा अपि तु श्राव्यैवेति । अत्र च तादृशवनदशारूपस्याप्रस्तुतार्थस्य प्रस्तुते देशे कथनात्प्रस्तुतवृत्तान्तस्योक्तरूपस्य प्रतीतिः । न चात्र वारणेन्द्रलीलामितिवत्पदार्थनिदर्शना युक्तेति वाच्यम् । तत्र पूर्वार्द्धेन प्रकृतवृत्तान्तोपादानेन सादृश्यपर्यवसानरूपनिदर्शनासत्त्वेऽप्यत्र तदनुपादानेन तद्व्यङ्ग्यताप्रयुक्तविच्छित्तिविशेषवत्त्वेन ललितालङ्कारस्यैवोचितत्वात् । एतेन दशापदलक्षितनिःश्रीकत्वरूपकार्यद्वारेण कारणस्य राजकर्तृकत्यागकर्मत्वस्याभिधानात्पर्यायोक्तमित्यपि निरस्तम् । उपधेयसङ्करेऽप्युपाधेरसङ्कराच्चेति संक्षेपः ॥ १२७ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां ललितालङ्कारप्रकरणम् ॥ ६६ ॥

---

## प्रहर्षणालङ्कारः ६७.

**(चन्द्रा०)–उत्कण्ठितार्थसंसिद्धिर्विना यत्नं प्रहर्षणम् ।**
**तामेव ध्यायते तस्मै निसृष्टा सैव दूतिका ॥ १२८ ॥**

( कुव० )–उत्कण्ठा इच्छाविशेषः ।

"सर्वेन्द्रियसुखास्वादो यत्रास्तीत्यभिमन्यते ।
तत्प्राप्तीच्छां ससङ्कल्पामुत्कण्ठां कवयो विदुः ॥"

इत्युक्तलक्षणात्तद्विषयस्यार्थस्य तदुपायसम्पादनयत्नं विना सिद्धिः प्रहर्षणम् । उदाहरणं स्पष्टम् । यथा वा–

मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमै-
र्नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय ।
इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं
राधामाधवयोर्जयन्ति यमुनाकूले रहःकेलयः ॥

अत्र राधामाधवयोः परस्परमुत्कण्ठितत्वं प्रसिद्धतरमग्रे च ग्रन्थकारेण निबद्धमित्यत्रोदाहरणे लक्षणानुगतिः ॥ १२८ ॥

( अ०चं० )-दूतिकामेवेत्यर्थः । निसृष्टा प्रेषिता । ससङ्कल्पां मनोरथसहिताम् ॥ मेघैरिति । मेदुरं तुन्दिलम् । नक्तं रात्रिरस्तीति शेषः । नन्दनिदेशतो नन्दस्याज्ञावशात् । प्रत्यध्वकुञ्जद्रुममध्वसम्बन्धिकुञ्जद्रुमं द्रुमं प्रति । ग्रन्थकारेण गीतगोविन्दकृता ॥ १२८ ॥

(चंद्रा०)-वाञ्छितादधिकार्थस्य संसिद्धिश्च प्रहर्षणम् ।
दीपमुद्योजयेद्यावत्तावदभ्युदितो रविः ॥ १२९ ॥

( कुव० )-स्पष्टम् । यथा वा--

चातकस्त्रिचतुरान्पयःकणा-
न्याचते जलधरं पिपासया ।
सोऽपि पूरयति विश्वमम्भसा
हन्त हन्त महतामुदारता ॥ १२९ ॥

( अ०चं० )-चातक इति ॥ यत्तु चातकस्य त्रिचतुरकणमात्रार्थितया जलदकर्तृकेणाम्भसा विश्वपूरणेन हर्षाधिक्याभावादयुक्तमुदाहरणमिति । तत्तुच्छम् , हेत्वसिद्धेः । न हि क्षुदुपशमाय तत्पर्याप्तान्नमात्रार्थिनस्तदधिकान्नलाभे हर्षाधिक्यं नास्तीति वक्तुं शक्यते । तदानीमुपयोगाभावेऽपि स्वस्यैव कालान्तरे तदुपयोगसत्त्वात् । न च चातकस्य जलसङ्ग्रहानुपयोगाद्वैषम्यं शङ्कनीयम् । चातकवृत्तान्तस्याप्रस्तुततया तद्व्यङ्ग्ये प्रस्तुतदातृयाचकवृत्तान्ते काव्यस्य पर्यवसानादिति ॥ १२९ ॥

(चं०)-यत्नादुपायसिद्ध्यर्थात्साक्षाल्लाभः फलस्य च
निध्यञ्जनौषधीमूलं खनता साधितो निधिः ॥ १३० ॥

( कुव० )-फलोपायसिद्ध्यर्थाद्यत्नान्मध्ये उपायसिद्धिमनपेक्ष्य साक्षात्फलस्यैव लाभोऽपि प्रहर्षणम् । यथा निध्यञ्जनसिद्ध्यर्थं मूलिकां खनतस्तत्रैव निधेर्लाभः । यथा वा-

उच्चित्य प्रथममधःस्थितं मृगाक्षी
पुष्पौघं श्रितविटपं ग्रहीतुकामा ।
आरोढुं पदमदधादशोकयष्टा-
वामूलं पुनरपि तेन पुष्पिताऽभूत् ॥

अत्र पुष्पग्रहणोपायभूतारोहणसिद्ध्यर्थात्पदनिधानात्तत्रैव पुष्पग्रहणलाभः ॥ १३० ॥

( अ० चं० )–तृतीयं प्रभेदमाह–यत्नादिति ॥ प्रहर्षणमित्यनुवर्तते ॥ निध्यञ्जनेति । निधिदर्शनसाधनं यदञ्जनं तत्साधनौषधीमूलमित्यर्थः । साधितो लब्धः ॥ उज्झित्येति । अधःस्थितं वृक्षस्याधोदेशे स्थितम् । अवस्थितमिति पाठे समीपाशोकयष्टाववस्थितमित्यर्थः । श्रिता आश्रिता विटपाः शाखा येनेति पुष्पौघविशेषणम् । अदधादाहितवती । यष्टिः स्कन्धः । तेन पादाघातेन । पुनरप्यामूलं पुष्पिताभूदर्थादशोकयष्टिः । अत्र च तदसाध्यकयत्नात्तल्लाभ इति प्रकारत्रयसाधारणं सामान्यलक्षणं बोध्यम् ॥ १३० ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां प्रहर्षणालङ्कारप्रकरणम् ॥ ६७ ॥

---

## विषादनालङ्कारः ६८.

(चन्द्रा०)–इष्यमाणविरुद्धार्थसम्प्राप्तिस्तु विषादनम् ।
दीपमुद्योजयेद्यावन्निर्वाणस्तावदेव सः ॥ १३१ ॥

( कुव० )–यथा वा–

रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः ।
इत्थं विचिन्तयति कोशगते द्विरेफे
हा हन्त हन्त नलिनीं गज उज्जहार ॥ १३१ ॥

( अ० चं० )–इष्यमाणविरोधी योऽर्थस्तत्सम्प्राप्तिर्विषादनमलङ्कारः । उद्योजयेदुद्दीप्तं कुर्यात । उद्योजयेद्यावदित्यनेन तदिच्छामात्रं न तु तत्करणमिति विषमाद्भेदः । एवमग्रिमोदाहरणेऽपीच्छामात्रं न त्विष्टोत्पत्त्यनुकूलाचरणमिति ॥ १३१ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां विषादनालङ्कारप्रकरणम् ॥ ६८ ॥

---

## उल्लासालङ्कारः ६९.

(चंद्रा०)–एकस्य गुणदोषाभ्यामुल्लासोऽन्यस्य तौ यदि।
अपि मां पावयेत्साध्वी स्नात्वेतीच्छति जाह्नवी १३२॥

काठिन्यं कुचयोः स्रष्टुं वाञ्छन्त्यः पादपद्मयोः।
निन्दन्ति च विधातारं त्वद्धाटीष्वरियोषितः॥१३३॥
तदभाग्यं धनस्यैव यन्नाश्रयति सज्जनम्।
लाभोऽयमेव भूपालसेवकानां न चेद्वधः॥ १३४ ॥

( कुव० )–यत्र कस्यचिद्गुणेनान्यस्य गुणो दोषेण दोषो गुणेन दोषो दोषेण गुणो वा वर्ण्यते स उल्लासः। द्वितीयार्द्धमाद्यस्योदाहरणम्। तत्र पतिव्रतामहिमगुणेन तदीयस्नानतो गङ्गायाः पावनत्वगुणो वर्णितः। द्वितीयश्लोके द्वितीयस्योदाहरणम्। तत्र राज्ञो धाटीषु वने पलायमानानामरातियोषितां पादयोर्धावनपरिपन्थिमार्दवदोषेण तयोः कांठिन्यमसृष्ट्वा व्यर्थं कुचयोस्तत्सृष्टवतो धातुर्निन्द्यत्वदोषो वर्णितः। तृतीयश्लोकस्तृतीयचतुर्थयोरुदाहरणम्। तत्र सज्जनमहिमगुणेन धनस्य तदनाश्रयणं दोषत्वेन राज्ञः क्रौर्यदोषेण तत्सेवकानां वधं विना विनिर्गमनं गुणत्वेन वर्णितम्॥

( अ०चं० )–एकस्येति॥ एकस्य गुणदोषाभ्यामन्यस्य तौ गुणदोषौ यदि भवतस्तदोल्लासालङ्कारः॥ अपीति। अपिः सम्भावनायाम्। साध्वी पतिव्रता स्नात्वा मां पावयेदिति जाह्नवी इच्छतीत्यन्वयः। तव धाटीषु युद्धयात्रासु कुचयोः सृष्टं काठिन्यं पादपद्मयोर्वाञ्छन्त्योऽरियोषितो विधातारं निन्दन्तीत्यन्वयः। स्रष्टुमिति पाठे कुचयोः काठिन्यं पदयोः स्रष्टुमिच्छन्त्य इत्यन्वयः॥ लाभोऽयमिति। भूपालसेवकानामयमेव लाभो यदि वधो न भवतीत्यन्वयः॥

कुव० )–अनेनैव क्रमेणोदाहरणान्तराणि।

यदयं रथसङ्क्षोभादंसेनांसो निपीडितः।
एकः कृती मदङ्गेषु शेषमङ्गं भुवो भरः॥

अत्र नायिकासौन्दर्यगुणेन तदंसनिपीडितस्य स्वांसस्य कृतित्वगुणो वर्णितः॥

लोकानन्दन चन्दनद्रुम सखे नास्मिन्वने स्थीयतां
दुर्वंशैः परुषैरसारहृदयैराक्रान्तमेतद्वनम् ।
ते ह्यन्योन्यनिघर्षजातदहनज्वालावलीसङ्कुला
न स्वान्येव कुलानि केवलमहो सर्वं दहेयुर्वनम् ॥

अत्र वेणूनां परस्परसङ्घर्षणसञ्जातदहनसङ्कुलत्वदोषेण वननाशरूपदोषो वर्णितः ।

दानार्थिनो मधुकरा यदि कर्णतालै-
र्दूरीकृताः करिवरेण मदान्धबुद्ध्या ।
तस्यैव गण्डयुगमण्डनहानिरेषा
भृङ्गाः पुनर्विकचपद्मवने चरन्ति ॥

अत्र भ्रमराणामलङ्करणत्वगुणेन गजस्य तत्प्रतिक्षेपो दोषत्वेन वर्णितः ।

आघ्रातं परिचुम्बितं परिमुहुर्लीढं पुनश्चर्वितं
त्यक्तं वा भुवि नीरसेन मनसा तत्र व्यथां मा कृथाः ।
हे सद्रत्न तवैव देव कुशलं यद्वानरेणादरा-
दन्तःसारविलोकनव्यसनिना चूर्णीकृतं नाश्मना ॥

अत्र वानरस्य चापलदोषेण रत्नस्य चूर्णनाभावो गुणत्वेन वर्णितः । अत्र प्रथमचतुर्थयोरुल्लासोऽन्वर्थः । मध्यमयोश्छत्रिन्यायेन लाक्षणिकः ॥ १३२ ॥ १३३ ॥ १३४ ॥

( अ०चं० )–यदयमिति ॥ रथस्य संक्षोभाच्चलनाद्यदयमंसोंऽसेनार्थाद्दयिताया निपीडितः सङ्घृष्टो ममाङ्गेषु मध्ये स एवैकः कृती कुशलः । अवशिष्टमङ्गं भूमेर्भारमित्यर्थः । दुर्वंशैर्दुष्टवेणुभिर्दुष्कुलैश्चेत्यादिः श्लेषो बोध्यः । वननाशरूपो वनसम्बन्धिनाशरूपः । वनस्येति युक्ततरः पाठः । तत्प्रतिक्षेपो भ्रमरनिरासो गजस्य दोषत्वेनेति सम्बन्धः ॥ आघ्रातमिति । मुहुः परिलीढमास्वादितम् । नीरसेन मनसा करणभूतेन । वानरेण कर्त्रा । तत्र तस्मिन्सति । विचारणव्यसनिना विचारणतत्परेण । अश्मना पाषाणेन । प्रथमचतुर्थयोर्गुणेनगुणदोषेण वा गुण इति भेदयोः । उल्लास उल्लासशब्दः । अन्वर्थ इति । उत्कटोल्लासः सुखं यत्रेत्यर्था-

नुगत इत्यर्थः ॥ छत्रिन्यायेनेति । केषुचिच्छत्रसम्बन्धाच्छत्र्यच्छत्रिसमुदाये छत्रिणो यान्तीतिवदित्यर्थः ॥ १३२ ॥ १३३ ॥ १३४ ॥

इत्यलंकारचन्द्रिकायां कुवलयानन्दटीकायामुल्लासालङ्कारप्रकरणम् ॥ ६९ ॥

---

## अवज्ञालङ्कारः ७०.

(चंद्रा०)-ताभ्यां तौ यदि न स्यातामवज्ञालङ्कृतिस्तु सा ।
स्वल्पमेवाम्बु लभते प्रस्थं प्राप्यापि सागरम् ।
मीलन्ति यदि पद्मानि का हानिरमृतद्युतेः ॥१३६॥

(कुव० )-ताभ्यां गुणदोषाभ्याम् । तौ गुणदोषौ । अत्र कस्यचिद्गुणेनान्यस्य गुणालाभे द्वितीयार्द्धमुदाहरणम् । दोषेण दोषस्याप्राप्तौ तृतीयार्द्धम् ।

यथा-मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः
किमस्या नाम स्यादरसपुरुषानादरभरैः ।
यथा यूनस्तद्वत्परमरमणीयापि रमणी
कुमाराणामन्तःकरणहरणं नैव कुरुते ॥
त्वं चेत्सञ्चरसे वृषेण लघुता का नाम दिग्दन्तिनां
व्यालैः कङ्कणभूषणानि कुरुषे हानिर्न हेम्नामपि ।
मूर्द्धन्यं कुरुषे सितांशुमयशः किन्नाम लोकत्रयी-
दीपस्याम्बुजबान्धवस्य जगतामीशोऽसि किं ब्रूमहे ॥

अत्राद्ये कवितारमणीगुणाभ्यामरसबालकयोर्हृदयोल्लासरूपगुणाभावो वर्णितः । द्वितीये परमेश्वरानङ्गीकरणदोषेण दिग्गजादीनां लघुतादिदोषाभावो वर्णितः॥१३५॥

(अ०चं० )-प्रस्थं प्रस्थपरिमाणपात्रम् । मदुक्तिरिति । ममोक्तिः कविता । सुधियोन्तःकरणं सुधीभूयामृतीभूय चेन्मदयति तोषयति तदाऽस्या मदुक्तेः अरसानां नीरसानां पुरुषाणामनादरसमूहैः किं नाम स्यान्न किञ्चिदित्यर्थः । क्वचिदलसेति पाठः । परमरमणीयापि । केव । रमणी स्त्री यूनस्तरुणस्य यथान्तःकरणहरणं कुरुते न तद्वत्कुमाराणां बालानामि-

त्यन्वयः ॥ त्वं चेदिति । शिवं प्रति कस्यापि कवेरुक्तिः । जलांशुं चन्द्रं पक्षे जडांशुम् । अम्बुजबान्धवः सूर्यः । उल्लासरूपगुणाभाव उल्लासरूपस्य गुणस्याभावः ॥ १३५ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायामवज्ञालङ्कार-प्रकरणम् ॥ ७० ॥

---

## अनुज्ञालङ्कारः ७१.

( चन्द्रा० )-दोषस्याभ्यर्थनाऽनुज्ञा तत्रैव गुणदर्शनात्।
विपदः सन्तु नः शश्वद्यासु सङ्कीर्त्यते हरिः ॥१३६॥

यथा वा-मय्येव जीर्णतां यातु यत्त्वयोपकृतं हरे ।
नरः प्रत्युपकारार्थी विपत्तिमभिकांक्षति ॥

इयं हनुमन्तं प्रति राघवस्योक्तिः । अत्र प्रत्युपकाराभावो दोषस्तदभ्युपगमे हेतुर्गुणो विपत्त्याकांक्षाया अप्रसक्तिः । सा च व्यतिरेकमुखप्रवृत्तेन सामान्येन विशेषसमर्थनरूपेणार्थान्तरन्यासेन दर्शिता । यथा वा-

व्रजेम भवदन्तिकं प्रकृतिमेत्य पैशाचिकीं
किमित्यमरसम्पदः प्रमथनाथ नाथामहे ।
भवद्भवनदेहलीविकटतुण्डदण्डाहति-
त्रुटन्मुकुटकोटिभिर्मघवदादिभिर्भूयते ॥ १३६ ॥

( अ० चं० )-दोषस्येति ॥ अभ्यर्थना इच्छा । तत्रैव दोष एव ॥ अनुज्ञेति लक्ष्यनिर्देशः । शश्वन्निरन्तरं सङ्कीर्त्यत इत्यनेनान्वयि ॥ मय्येवेति । जीर्णतां प्रत्युपकाराक्षमताम् । हरिशब्दो वानरार्थः ॥ व्यतिरेकमुखेति। वैधर्म्यमुखेत्यर्थः । अस्य चार्थान्तरन्यासेनेत्यनेनान्वयः ॥ दर्शितेति । वैधर्म्यविपर्यये प्रत्युपकारानभिलाषी विपत्तिं नाकांक्षतीत्यर्थपर्यवसानादिति भावः ॥ व्रजेमेति । हे प्रमथनाथ हर पैशाचिकीं पिशाचसम्बन्धिनीं प्रकृतिं पिशाचतामेत्य प्राप्य भवतोऽन्तिकं समीपदेशं भजेम । अमरसम्पत्तीः किमिति प्रार्थयामहे । यतो मघवदादिभिरिन्द्रप्रमुखैरपि भवद्भवनदेहलीषु विकटतुण्डस्य वक्रतुण्डस्य दण्डाघातैः स्फुटन्मुकुटाग्रैर्भूयत इत्यन्वयः ॥ १३६ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायामनुज्ञालङ्कार-प्रकरणम् ॥ ७१ ॥

---

## लेशालङ्कारः ७२.

(चन्द्रा०)–लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम् ।
अखिलेषु विहङ्गेषु हन्त स्वच्छन्दचारिषु ॥
शुक पञ्जरबन्धस्ते मधुराणां गिरां फलम्॥१३७॥

( कुव० )–दोषस्य गुणत्वकल्पनं गुणस्य दोषत्वकल्पनं च लेशः । उदाहरणं राज्ञोऽभिमते विदुषि पुत्रे चिरं राजधान्यां प्रवसति तद्दर्शनोत्कण्ठितस्य गृहे स्थितस्य पितुर्वचनमप्रस्तुतप्रशंसारूपम् । तत्र प्रथमार्द्धे इतरविहगानामवक्तृत्वदोषस्य स्वच्छन्दचरणानुकूलतया गुणत्वं कल्पितम्, द्वितीयार्द्धे मधुरभाषित्वस्य गुणस्य पञ्जरबन्धहेतुतया दोषत्वं कल्पितम् । न चात्र व्याजस्तुतिराशङ्कनीया । न ह्यत्र विहगान्तराणां स्तुतिव्याजेन निन्दायां शुकस्य निन्दाव्याजेन स्तुतौ च तात्पर्यम् । किंतु पुत्रदर्शनोत्कण्ठितस्य दोषगुणयोर्गुणदोषत्वाभिमान एवात्र श्लोके निबद्धः ।

यथा वा–

सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः
सर्वत्रैव जनापवादचकिता जीवन्ति दुःखं सदा ।
अव्युत्पन्नमतिः कृतेन न सता नैवासता व्याकुलो
युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः ॥

( अ० चं० )–लेश इति लक्ष्यनिर्देशः । प्रवसतीति सति सप्तम्यन्तम् । शुकस्य निन्दाया निन्दाव्याजेन स्तुतौ चेत्यन्वयः ॥ सन्त इति । सच्चरितस्योदयो वृद्धिस्तद्व्यसनिनस्तत्पराः प्रादुर्भवद्यन्त्रणं स्वेच्छाचरणनिरोधो येषां ते । सर्वत्रैव विषये ॥ दुःखमिति क्रियाविशेषणम् । अव्युत्पन्नमतिरनिपुणमतिः । सता समीचीनेन कृतेनाचरणेन प्राकृतो नीचः ॥

( कुव० )–दण्डी त्वत्रोदाजहार–

"युवैष गुणवान्राजा योग्यस्ते पतिरूर्जितः ।

रणोत्सवे मनः सक्तं यस्य कामोत्सवादपि ॥
चपलो निर्दयश्चासौ जनः किं तेन मे सखि ।
आगःप्रमार्जनायैव चाटवो येन शिक्षिताः ॥"

अत्राद्यश्लोके राज्ञो वीर्योत्कर्षस्तुतिः । कन्याया निरन्तरसम्भोगानिर्विविवर्तिषया दोषत्वेन प्रतिभा..तामित्यभिप्रेत्य विदग्धया सख्या राजप्रकोपपरिजिहीर्षया स एव दोषो गुणत्वेन वर्णितः । उत्तरश्लोके सखीभिरुपदिष्टं मानं कर्तुमशक्तयापि तदग्रतो मानपरिग्रहानुगुण्यं प्रतिज्ञाय तदनिर्वाहमाशङ्कमानया सखीनामुपहासं परिजिहीर्षन्त्या नायिकया नायकस्य चाटुकारितागुण एव दोषत्वेन वर्णितः । न चाद्यश्लोके स्तुतिनिन्दापर्यवसायिनी द्वितीयश्लोके निन्दास्तुतिपर्यवसायिनीति व्याजस्तुतिराशङ्कनीया । राजप्रकोपादिपरिहारार्थमिह निन्दास्तुत्योरन्याविदितया लेशत एवोद्घाटनेन ततो विशेषादिति ।

( अ० चं० )–युवैष इति ॥ वरार्थिनीं कन्यकां प्रति सखीवचनम् । चपल इत्यादि च नायिकायाः सखीं प्रति । उत्सेक इति पाठेऽप्युत्कर्ष एवार्थः। कन्याया दोषत्वेन भासतामित्यन्वयः । निर्वर्तितुमिच्छा निर्विवर्तिषा तद्रूपदोषत्वेनेत्यर्थः । निर्विवित्सोरिति पाठे राज्ञो विशेषणम् । कुतस्तर्हि गुणत्वेन वर्णनं तत्राह–राजप्रकोपेति ॥ अन्येनाविदितं यथा स्यादिति क्रियाविशेषणम् ॥ लेशत एवेति । तदुक्तं दण्डिनैव–"लेशमेके विदुर्निन्दां स्तुतिं वा लेशतः कृताम्" इति ॥

( कुव० )–वस्तुतस्त्विह व्याजस्तुतिसद्भावोऽपि न दोषः । न ह्येतावता लेशमात्रस्य व्याजस्तुत्यन्तर्भावः प्रसज्जते । तदसङ्कीर्णयोरपि लेशोदाहरणयोर्दर्शितत्वात् । नापि व्याजस्तुतिमात्रस्य लेशान्तर्भावः प्रसज्जते । भिन्नविषयव्याजस्तुत्युदाहरणेषु "कस्त्वं वानर रामराजभवने लेखार्थसंवाहकः" "यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून्मृषा" इत्यादिषु दोषगुणीकरणस्य गुणदोषीकरणस्य चाभावात्। तत्रान्यगुणदोषाभ्यामन्यत्र गुणदोषयोः प्रतीतेः ॥

( अ० चं० )-लेशमात्रस्येति कृत्स्नार्थकम् । उदाहरणयोरखिलेष्वित्यायोः ॥ भिन्नविषयेति । अन्यनिन्दयाऽन्यस्य स्तुतिरन्यस्तुत्यान्यनिन्देत्यादिरूपेत्यर्थः ॥

( कुवल० )-विषयैक्येऽपि

"इन्दोर्लक्ष्म त्रिपुरजयिनः कण्ठमूलं मुरारि-
र्दिङ्नागानां मदजलमषीभाञ्जि गण्डस्थलानि ।
अद्याप्युर्वीवलयतिलक श्यामलिम्नानुलिप्ता-
न्याभासन्ते वद धवलितं किं यशोभिस्त्वदीयैः ॥"

इत्याद्युदाहरणेषु लेशास्पर्शनात् । तत्र हीन्दुलक्ष्मादीनां धवलीकरणाभावदोष एव गुणत्वेन न पर्यवस्यति किं तु परिसंख्यारूपेण ततोऽन्यत्सर्वं धवलितमित्यन्यो गुणः प्रतीयते । क्वचिद्व्याजस्तुत्युदाहरणे गुणदोषीकरणसत्त्वेऽपि स्तुतेर्विषयान्तरमपि दृश्यते ।

अ० चं० )-ननु तथाप्येकविषयव्याजस्तुतिर्न लेशाद्भिद्येतेत्याशङ्क्याह-विषयैक्येऽपीति । लेशास्पर्शनादित्यग्रेतनेनान्वयः ॥ इन्दोरिति । हे उर्वीवलयतिलकरूप राजन् त्वदीयैर्यशोभिः किं धवलितं तद्वद यतोऽद्यापि इन्दुलक्ष्मादीनि श्यामलिम्ना श्यामवर्णेनानुलिप्तान्याभासन्ते इत्यन्वयः । लक्ष्म लाञ्छनं दिङ्नागानां दिग्गजानां मदजलमेव मषी तद्भाञ्जि तद्युक्तानि । परिसङ्ख्येति । एतान्येव श्यामानीत्येवंरूपेत्यर्थः । विषयान्तरं दोषीकृताद्भिन्नं गुणरूपमालम्बनम् ॥

( कुव० ) यथा-सर्वदा सर्वदोऽसीति मिथ्या संस्तूयते बुधैः ।
नारयो लेभिरे पृष्ठं न वक्षः परयोषितः ॥

अत्र हि वाच्यया निन्दया परिसंख्यारूपेण ततोऽन्यत्सर्वमर्थिनामभिमतं दीनारादि दीयते इति स्तुत्यन्तरमपि प्रतीयते । एवं च येषूदाहरणेषु कस्ते शौर्यमदो योद्धुमित्यादिषु गुणदोषादिषु गुणदोषीकरणादिकमेव व्याजस्तुतिरूपतयाऽवतिष्ठते, तत्र लेशव्याजस्तुत्योः सङ्करोऽस्तु । इत्थमेव हि व्याजस्तुत्यप्रस्तुतप्रशंसयोरपि प्राक्सङ्करो वर्णितः ॥ १३७ ॥

( अ०चं० )-सर्वदेति । अरयः पृष्ठमर्थात्तव न लेभिरेऽप्राप्तवन्तः पलायनाभावात् । दीनारः परिमाणविशेषपरिच्छिन्ना सुवर्णमुद्रा । एवं च लेशव्याजस्तुत्योरसङ्कीर्णविषयसत्त्वे च गुणदोषीकरणादिकमित्यादिपदेन दोषगुणीकरणसंभवः । येष्वित्युपक्रमात्तत्रेति पाठो युक्ततरः । अत्रेत्यपि युक्त एव । इदमोऽपि यच्छब्दार्थपरामर्शकत्वात् ॥ १३७ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां लेशालङ्कारप्रकरणम् ॥ ७२ ॥

---

## मुद्रालङ्कारः ७३.

**( चं० )सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः ।**
**नितम्बगुर्वी तरुणी दृग्युग्मविपुला च सा ॥ १३८ ॥**

( कुव० )-अत्र नायिकावर्णनपरेण युग्मविपुलापदेनास्यानुष्टुभो युग्मविपुलानामत्वरूपसूच्यार्थसूचनं मुद्रा । यद्यप्यत्र ग्रन्थे वृत्तनाम्नो नास्ति सूचनीयत्वं तथाप्यस्योत्तरार्द्धस्य लक्ष्यलक्षणयुक्तच्छन्दःशास्त्रमध्यपातित्वेन तस्य सूचनीयत्वमस्तीति तदभिप्रायेण लक्षणं योज्यम् । एवं नवरत्नमालायां तत्तद्रत्ननामनिवेशेन तत्तन्नामकजातिसूचनम् । नक्षत्रमालायामग्न्यादिदेवतानामभिर्नक्षत्रसूचनमित्यादावयमेवालंकारः । एवं नाटकेषु वक्ष्यमाणार्थसूचनेऽप्यपि ॥ १३८ ॥

( अ०चं० )-सूच्यार्थेति ॥ सूचनीयस्यार्थस्येत्यर्थः । मुद्रेति लक्ष्यनिर्देशः । दृग्युग्मं विपुलं यस्याः सा । अत्र ग्रन्थे अस्मिन्नलङ्कारग्रन्थे । रत्नमालाशब्देन भगवत्स्तुतिपद्यावलीविशेष उच्यते । रत्ननामनिवेशेन प्रकृतार्थपररत्नवाचिपदघटनेन । तत्तन्नामकजातिसूचनं तत्तन्नामप्रवृत्तिनिमित्तरत्नजातिसूचनम् । नक्षत्रमालाशब्दार्थोऽपि पूर्वोक्त एव । अग्न्यादिदेवतानामभिर्नक्षत्राणां तद्दैवत्यानां सूचनं बोध्यम् ॥ वक्ष्यमाणेति । यथा अनर्घ्यराघवे-"यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् । अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥" इति सूत्रधारवचनेन वक्ष्यमाणरामरावणवृत्तान्तसूचनमिति बोध्यम् ॥ १३८ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां मुद्रालङ्कारप्रकरणम् ॥ ७३ ॥

---

## रत्नावल्यलङ्कारः ७४.

(चंद्रा०)–क्रमिकं प्रकृतार्थानां न्यासं रत्नावलीं विदुः।
चतुरास्यः पतिर्लक्ष्म्याः सर्वज्ञस्त्वं महीपते॥ १३९॥

(कुव०)–अत्र चतुरास्यादिपदैर्वर्णनीयस्य ब्रह्मविष्णुरुद्रात्मता प्रतीयत इति प्रसिद्धसहपाठानां क्रमेण निवेशनं रत्नावली। यथा वा–

रत्याप्तप्रियलाञ्छने कठिनतावासे रसालिङ्गिते
प्रह्लादैकरसे क्रमादुपचिते भूभृद्गुरुत्वापहे।
कोकस्पर्द्धिनि भोगभाजि जनितानङ्गे खलीनोन्मुखे
भाति श्रीरमणावतारदशकं बाले भवत्याः स्तने॥

(अ०चं०)–क्रमिकमिति॥ प्रकृतार्थानां क्रमिकं प्रसिद्धक्रमानुसारि न्यसनं प्रतिपादनं रत्नावल्यलङ्कारः। प्रकृतत्वं च यथाकथञ्चित्प्रकृतसम्बन्धवत्त्वं बोध्यम्॥ चतुरेति। चतुरमास्यं यस्य स चतुर्मुखश्च॥ रत्याप्तेति। हे बाले भवत्याः स्तने श्रीरमणस्य विष्णोरवतारदशकं भातीत्यन्वयः। कीदृशे। रत्यावाप्तं प्राप्तं प्रियस्य लाञ्छनं चिह्नं नखक्षताङ्गरागादिकं येन तथाभूते। कठिनताया आवासे स्थानभूते। रसेनालिङ्गिते। प्रकृताह्लादैकरसे तत्परे। क्रमाद्बदरामलकादिपरिमाणलाभेनोपचिते प्रवृद्धे। भूभृतां पर्वतानां गुरुत्वमपहन्ति नाशयति तादृशे ततोऽपि महत्त्वात्। चक्रवाकस्पर्द्धाशीले तत्सदृशत्वात्। भोगः सुखं शरीरं वा तद्भाजि। जनितमदने। खेष्विन्द्रियेषु लीना आसक्ता उन्मुखा यस्मिन् तादृशे। एतैरेव विशेषणैरवतारदशकरूपतापि स्तनस्य बोध्या। तद्यथा रत्या आप्तः प्रियः कामस्तस्य लाञ्छनं मत्स्यस्तद्रूपे। कठिनताया आवासे कूर्मे। रसया पृथिव्या स्वोद्धरणकाल आलिङ्गिते वराहे। प्रह्लादे एको रसः प्रीतिर्यस्य तस्मिन्नृसिंहे। क्रमः पादविक्षेपस्तदनुसारेणोपचिते प्रवृद्धे वामने। भूभृतां राज्ञां गौरवनाशके भार्गवे। कोकस्पर्धिनि सीतावियोगातुरतया चक्रवाकशापदे रामे। भोगः फणा तद्भाजि शेषावतारे बलभद्रे। जनितमनङ्गमङ्गस्य शरीरस्य विरुद्धं मौनभोगत्यागसमाधिप्रभृति येन तस्मिन् बुद्धे। खलीनमश्वस्य वल्गा तदुन्मुखे कल्किनीति॥

(कुव० ) यथा वा-

लीलाब्जानां नयनयुगलद्राघिमा दत्तपत्रः
कुम्भावेतौ कुचपरिकरः पूर्वपक्षीचकार ।
भ्रूविभ्रान्तिर्मदनधनुषो विभ्रमानन्ववादी-
द्वक्त्रज्योत्स्ना शशधररुचं दूषयामास यस्याः ॥

अत्र पत्रदानपूर्वपक्षोपन्यासानुवाददूषणोद्भावनानि बुधजनप्रसिद्धक्रमेण न्यस्तानि। प्रसिद्धसहपाठानां प्रसिद्धक्रमानुसरणेऽप्ययमेवालंकारः।

यथा वा-यस्य वह्निमयो हृदयेषु जलमयो लोचनपुटेषु मारुतमयः श्वसितेषु क्षमामयोऽङ्गेष्वाकाशमयः स्वान्तेषु पञ्चमहाभूतमयो मूर्त इवादृश्यत निहतप्रतिसामन्तान्तःपुरेषु प्रतापः ।

एवमष्टलोकपालनवग्रहादीनां प्रसिद्धसहपाठानां यथाकथञ्चित्प्रकृतोपमानोपरञ्जकतादिप्रकारेण निवेशने रत्नावल्यलङ्कारः। प्रकृतान्वयं विना क्रमिकतत्तन्नाम्ना श्लेषभङ्ग्या निवेशने क्रमप्रसिद्धरहितानां प्रसिद्धसहपाठानां नवरत्नादीनां निवेशनेऽप्ययमेवालङ्कारः ॥ १३९ ॥

( अ०चं० )-क्रमानुसरणेऽपीति। तथा च प्रसिद्धसहपाठानामर्थानां न्यसनं रत्नावलीति सामान्यलक्षणम्। सक्रमाक्रमत्वे तत्प्रभेदाविति भावः ॥ यस्येति। यस्य प्रतापः निहतानां प्रतिशत्रुभूतानामन्तःपुरेषु पञ्चमहाभूतमयो मूर्त इवादृश्यतेत्यन्वयः।पञ्चमहाभूतमयत्वमेव विशेषणैर्दर्शयति-वह्निमय इत्यादि॥ अङ्गेषु क्षमामयः पृथ्वीमयः पीडाभरसहिष्णुत्वात्। स्वान्तेष्वन्तःकरणेषु आकाशमयः तेषां शून्यताश्रयत्वात्। यथाकथञ्चिदित्यस्य प्रपञ्चनं-प्रकृतोपमानेत्यादि । उपमानं चोपरञ्जकं चोपमानोपरञ्जके तयोर्भावस्तत्ता प्रकृतं प्रत्युपमानता उपरञ्जकता चेत्यर्थः। उपरञ्जकता चारोप्यमाणता । तदुक्तम्-"उपरञ्जकतामेति विषयी रूपकं तदा" इति । तत्रोपमानता रविरिव प्रतिदिवसोपजायमानोदय इत्यादिवत् । उपरञ्जकता तु चतुरास्य इत्युदाहरणे वह्निमय इत्यादिप्रतापवर्णने च स्पष्टेति ॥ प्रकृतान्वयं विनेति। "मित्र चन्द्रमुखी

बाला लोहिताधरपल्लवा ।" इत्यादाविति भावः । क्रमिकेत्युपलक्षणम् । तदभावेऽपि । "गुरुणा जघनेनैषा तरुणी मन्दगामिनी । " इत्यादावप्ययमलङ्कार इति बोध्यम् ॥ १३९ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां रत्नावल्यलङ्कारप्रकरणम् ॥ ७४ ॥

---

## तद्गुणालङ्कारः ७५.

(चन्द्रा०)-तद्गुणः स्वगुणत्यागादन्यदीयगुणग्रहः ।
पद्मरागायते नासामौक्तिकं तेऽधरत्विषा ॥१४०॥

( कुव० )-यथा वा

वीर त्वद्रिपुरमणी परिधातुं पल्लवानि संस्पृश्य ।
न हरति वनभुवि निजकररुहरुचिखचितानि
पाण्डुपत्रधिया ॥ १४० ॥

( अ०चं० )-तद्गुण इति ॥ स्वगुणत्यागादन्तरमन्यदीयगुणग्रहणं तद्गुणालङ्कारः ॥ पद्मेति । तव नासामौक्तिकमधरकान्त्या पद्मरागवदाचरतीत्यर्थः ॥ वीरेति । हे वीर त्वदरिकामिनी वनभुवि परिधानं कर्तुं पल्लवानि करेण संस्पृश्य पाण्डुपत्रबुद्ध्या न हरति न गृह्णाति । कीदृशानि । निजकररुहाणां नखानां रुच्या श्वेतकान्त्या खचितानि व्याप्तानीत्यर्थः ॥ १४० ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां तद्गुणालङ्कारप्रकरणम् ॥ ७५ ॥

---

## पूर्वरूपालङ्कारः ७६.

(चं०)-पुनः स्वगुणसम्प्राप्तिः पूर्वरूपमुदाहृतम् ।
हरकण्ठांशुलिप्तोऽपि शेषस्त्वद्यशसा सितः ॥१४१॥

( कुव० )-यथा वा-

विभिन्नवर्णा गरुडाग्रजेन
सूर्यस्य रथ्याः परितः स्फुरन्त्या ।
रत्नैः पुनर्यत्र रुचा रुचं स्वा-

मानिन्यिरे वंशकरीरनीलैः ॥
अयमेव तद्गुण इति केचिद्व्यवजह्रुः ॥ १४१ ॥

( अ० चं० )-पुनरिति ॥ स्वगुणत्यागानन्तरं पुनः स्वगुणप्राप्तिः पूर्वरूपमलङ्कारः ॥ हरेति । नीलोपीति युक्तः पाठः ॥ विभिन्नेति । माघे रैवतकगिरिवर्णनम् । गरुडाग्रजेनारुणेन विभिन्नवर्णा मिश्रितवर्णाः सूर्यस्य रथ्या अश्वा यत्र गिरौ वंशाङ्कुरवन्नीलै रत्नैः परितः स्फुरन्त्या रुचा स्वां रुचं नीलद्युतिमानिन्यिरे आनीतवन्तः, रुचा विभिन्नवर्णा इति वाऽन्वयः । केचिदित्यस्वरसबीजं तु पद्मरागायत इत्युदाहरणे तद्गुणालङ्कारो न स्यात् । न चेष्टापत्तिः । अनुभवसिद्धचमत्कारस्य निरालम्बनत्वापत्तेरित्यूहनीयम् । अथ वायं तद्गुण एवेत्येवकारक्रमभङ्गेन काव्यप्रकाशकारादिमतोपन्यासपरत्वेन व्याख्येयम् । तैरत्र तद्गुणस्योदाहृतत्वात् । अत्र हि पूर्वमश्वानामरुणगुणत्वमनन्तरं रैवतकरत्नैरुभयेषां तद्गुणत्वमिति तद्गुणद्वयमिति तेषामभिमतम् ॥ १४१ ॥

(चं०)-पूर्वावस्थानुवृत्तिश्च विकृते सति वस्तुनि ।
दीपे निर्वापितेऽप्यासीत्काञ्चीरत्नैर्महन्महः ॥१४२॥

(कुव० )-लक्षणे चकारात्पूर्वरूपमिति लक्ष्यवाचकपदानुवृत्तिः। यथा वा-

द्वारं खड्गिभिरावृतं बहिरपि प्रस्विन्नगण्डैर्गजै-
रन्तः कञ्चुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः ।
आक्रान्तं महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे
राजन्सैव चिरन्तनप्रणयिनी शून्येऽपि राज्यस्थितिः॥१४२॥

( अ०चं० )-पूर्वेति । वस्तुनि विकृते विगते सत्यपि पूर्वावस्थाया अनुवृत्तिरपि पूर्वरूपमलङ्कारः । महः प्रकाशः ॥ द्वारमिति । हे राजन् तव विद्विषां मन्दिरे शून्येऽपि चिरन्तनः प्रणयो यस्याः सैव राज्यस्य स्थितिर्मर्यादा । अस्तीति शेषः । यतो द्वारं खड्गिभिर्गण्डकाख्यपशुभिरेव खड्गधारिभिरावृतम् । बहिरपि भूमयो मदप्रस्विन्नगण्डैर्गजैरध्यासिताः । अन्तःपुरभूमयो विलसन्मणिधारिभिः कञ्चुकिभिः सर्पैरेव सौविदल्लैरध्यासिताः । शयनं तल्पं महिषीभिर्वनिताभिरेव महिषस्त्रीभिराक्रान्तमित्यन्वयः ॥ १४२ ॥

इत्यलंकारचन्द्रिकायां कुवलयानन्दटीकायां पूर्वरूपालङ्कारप्रकरणम् ॥ ७६ ॥

## अतद्गुणालङ्कारः ७७.

(चंद्रा०)–सङ्गतान्यगुणानङ्गीकारमाहुरतद्गुणम् ।
चिरं रागिणि मच्चित्ते निहितोऽपि न रञ्जसि ॥ १४३ ॥

( कुव० )–यथा वा–

गण्डाभोगे विहरति मदैः पिच्छिले दिग्गजानां
वैरिस्त्रीणां नयनकमलेष्वञ्जनानि प्रमार्ष्टि ।
यद्यप्येषा हिमकरकराद्वैतसौवस्तिकी ते
कीर्तिर्दिक्षु स्फुरति तदपि श्रीनृसिंह क्षितीन्द्र ॥

ननु चान्यगुणेनान्यत्र गुणोदयानुदयरूपाभ्यामुल्लासावज्ञालङ्काराभ्यां तद्गुणातद्गुणयोः को भेदः । उच्यते । उल्लासावज्ञालक्षणयोर्गुणशब्दो दोषप्रतिपक्षवाची । अन्यगुणेनान्यत्र गुणोदयतदनुदयौ च न तस्यैव गुणस्य सङ्क्रमणासङ्क्रमणे किं तु सद्गुरूपदेशेन सदसच्छिष्ययोर्ज्ञानोत्पत्त्यनुत्पत्तिवत्तद्गुणजन्यत्वेन सम्भावितयोर्गुणान्तरयोरुत्पत्त्यनुत्पत्ती । तद्गुणाऽतद्गुणयोः पुनर्गुणशब्दो रूपरसगन्धादिगुणवाची । तत्रान्यदीयगुणग्रहणाग्रहणे च रक्तस्फटिकवस्त्रमालिन्यादिन्यायेनान्यदीयगुणेनैवानुरञ्जनाननुरञ्जने विवक्षिते । तथैव चोदाहरणानि दर्शितानि । यद्यप्यवज्ञालंकृतिरतद्गुणश्च विशेषोक्तिविशेषावेव, "कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे ।" इति तत्सामान्यलक्षणाक्रान्तत्वात् । तथाप्युल्लासतद्गुणप्रतिद्वन्द्विना विशेषाकारेणालङ्कारान्तरतया परिगणिताविति ध्येयम् ॥ १४३ ॥

( अ० चं० )–सङ्गतेति ॥ सङ्गतः स्वसम्बद्धो योऽन्यः पदार्थस्तद्गुणानङ्गीकारमतद्गुणालङ्कारमाहुः ॥ चिरमिति । रागिण्यनुरागिणि मञ्जिष्ठादिरञ्जनद्रव्ययुक्ते च । निहितोऽपि त्वं न रञ्जसि रक्तोऽनुरागयुक्तश्च न भवसीति श्लिष्टम् ॥ गण्डेति । हे श्रीमन्नृसिंहाख्यभूपते एषा तव

कीर्तिर्मदैः पिच्छिले पङ्किले दिग्गजानां गण्डप्रदेशे यद्यपि विहरति तथा वैरिस्त्रीणां नयनकमलेषु स्थितान्यञ्जनानि प्रमार्ष्टि प्रोञ्छति तदपि तथापि दिक्षु हिमकरस्य चन्द्रस्य यत्किरणाद्वैतं तस्य सौवस्तिकी स्वस्तीत्याहेत्यर्थे "तदाहेति माशब्दादिभ्यष्ठग्वाच्यः" इत्यनेन ठक्प्रत्ययः । तत्सदृशीति यावत् । स्फुरति प्रकाशत इत्यर्थः । विशेषाकारेणेति । प्राग्लक्षितविशेषरूपेणेत्यर्थः ॥ १४३ ॥

इत्यलंकारचन्द्रिकायां कुवलयानन्दटीकायामतद्गुणालङ्कारप्रकरणम्॥७७॥

---

## अनुगुणालङ्कारः ७८.

(चन्द्रा०)–प्राक्सिद्धत्वगुणोत्कर्षोऽनुगुणः परसन्निधेः ।
नीलोत्पलानि दधते कटाक्षैरतिनीलताम् ॥ १४४ ॥

( कुव० )–यथा–

कपिरपि च कापिशायनमदमत्तो वृश्चिकेन सन्दष्टः ।
अपि च पिशाचग्रस्तः किं ब्रूमो वैकृतं तस्य ॥

अत्र कपित्वजात्या स्वतः सिद्धस्य वैकृतस्य मद्यादिभिरुत्कर्षः ॥ १४४ ॥

( अ०चं० )–प्रागिति ॥ परसन्निधिवशात्पूर्वसिद्धस्य स्वगुणस्योत्कर्षोऽनुगुणो नामालङ्कारः । नीलोत्पलानि कर्णावतंसीकृतानि ॥ कपिरिति । कापिशायनं मद्यम् ॥ १४४ ॥

इत्यलंकारचन्द्रिकायां कुवलयानन्दटीकायामनुगुणालङ्कार-
प्रकरणम् ॥ ७८ ॥

---

## मीलितालङ्कारः ७९.

( चं० )–मीलितं यदि सादृश्याद्भेद एव न लक्ष्यते ।
रसो नालक्षि लाक्षायाश्चरणे सहजाऽरुणे ॥ १४५ ॥

( कुव० )–यथा वा–

मल्लिकामाल्यभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः ।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥

अत्राद्ये चरणालक्तकरसयोररुणिमगुणसाम्याद्भेदानध्यवसायः। द्वितीयोदाहरणे चन्द्रिकाभिसारिकाणां धवलिमगुणसाम्याद्भेदानध्यवसायः॥ १४५ ॥

( अ० चं० )-मीलितमिति ॥ मीलितमिति लक्ष्यनिर्देशः ॥ रस इति। स्वभावलोहिते चरणे लाक्षाया रसो नालक्षि न ज्ञातः ॥ मल्लिकेति। क्षौमं दुकूलं तद्धारिण्यः ॥ १४५ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां मीलितालङ्कारप्रकरणम् ॥ ७९ ॥

---

## सामान्यालङ्कारः ८०.

(चं०)-सामान्यं यदि सादृश्याद्विशेषो नोपलक्ष्यते।
पद्माकरप्रविष्टानां मुखं नालक्षि सुभ्रुवाम् ॥१४६॥

( कुव० )-यथा वा-

रत्नस्तम्भेषु संक्रान्तैः प्रतिबिम्बशतैर्वृतः।
लङ्केश्वरः सभामध्ये न ज्ञातो वालिसूनुना ॥

मीलितालङ्कारे एकेनापरस्य भिन्नस्वरूपानवभासरूपं मीलनं क्रियते। सामान्यालङ्कारे तु भिन्नस्वरूपावभासेऽपि व्यावर्तकविशेषो नोपलक्ष्यत इति भेदः। मीलितोदाहरणे हि चरणादेर्वस्त्वन्तरत्वेनागन्तुकं यावकादि न भासते। सामान्योदाहरणे तु पद्मानां मुखानां च व्यक्त्यन्तरतया भानमस्त्येव। यथा रावणदेहस्य तत्प्रतिबिम्बानां च, किंत्विदं पद्ममिदं मुखमयं बिम्बोऽयं प्रतिबिम्ब इति विशेषः परं नोपलक्ष्यते। अत एव भेदतिरोधानान्मीलितं तदातिरोधानेऽपि साम्येन व्यावर्तकानवभासे सामान्यमित्युभयोरप्यन्वर्थता। केचित्तु वस्तुद्वयस्य लक्षणसाम्यात्तयोः केनचिद्बलीयसा तदन्यस्य स्वरूपतिरोधाने मीलितं स्वरूपप्रतीतावपि गुणसाम्याद्भेदतिरोधाने सामान्यम्।

( अ० चं० )–सामान्यमिति ॥ सामान्यमिति लक्ष्यनिर्देशः । विशेषो व्यावर्तकधर्मः । पद्मानामाकरः ॥ रत्नस्तम्भेष्विति । वालिसूनुनाङ्गदेन । एकेन चरणज्योत्स्नादिना । अपरस्य लाक्षारसाऽभिसारिकादेः ॥ भिन्नस्वरूपेति । मुखपद्मादेर्भिन्नस्य स्वरूपस्यावभासेऽपीत्यर्थः । उक्तमेवार्थमुदाहरणारूढतया विशदयति–मीलितोदाहरणे हीत्यादिना ॥ वस्त्वन्तरत्वेन न भासत इत्यन्वयः । तत्प्रतिबिम्बानां च व्यक्त्यन्तरतया भानमस्त्येवेत्यनुषङ्गः । केचिदित्यस्याहुरित्यग्रिमेणान्वयः । केचित्प्रकाशकारादयः । तदुक्तम्–" समेन लक्ष्मणा वस्तु वस्तुना यन्निगृह्यते । निजेनागन्तुना वापि तन्मीलितमिति स्मृतम् ॥ " इति । तयोर्मध्ये ॥

( कुव० )–एवं च–

अपाङ्गतरले दृशौ तरलवक्रवर्णा गिरो
विलासभरमन्थरा गतिरतीव कान्तं मुखम् ।
इति स्फुरितमङ्गके मृगदृशां स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥

इत्यत्र मीलितालङ्कारः । अत्र हि दृक्तारल्यादीनां नारीवपुषः सहजधर्मत्वान्मदोदयकार्यत्वाच्च तदुभयसाधारण्यादुत्कृष्टतारल्यादियोगिना वपुषा मदोदयस्य स्वरूपमेव तिरोधीयते । लिङ्गसाधारण्येन तज्ज्ञानोपायाभावात् । मल्लिकामालभारिण्य इत्यादिषु तु सामान्यालङ्कार इत्याहुः । तन्मते पद्माकरप्रविष्टानामित्यादौ भेदाध्यवसायेऽपि व्यावर्तकास्फुरणेनालङ्कारान्तरेण भाव्यम् । सामान्यालंकारान्तरान्तरभेदेन वा पूर्वस्मिन्मते स्वरूपतिरोधानेऽलंकारान्तरेण भाव्यं मीलितावान्तरभेदेन वा ॥ १४६ ॥

( अ० चं० )–एवं चेत्यस्येत्यत्र मीलितालङ्कार इत्यग्रेतनेनान्वयः ॥ अपाङ्गेति । अपाङ्गस्तरलो ययोस्ते । तरलाः सत्वरोच्चारणात् वक्रा वक्रोक्तिगर्भा वर्णा यासु ता गिरो वाक्यरूपाः । इति प्रकारेण मृगदृशामङ्गके लीलया स्वतः स्वभावात्स्फुरितं प्रकटीभूतं तत्तस्मादत्राङ्गके कृतपदः कृतस्थितिः ॥ भेदाध्यवसायेऽपीति । मुखपद्मयोर्भेदावभासेऽपीत्यर्थः । व्यावर्तकास्फुरणेन हेतुना ॥ अलङ्कारान्तरेणेति । स्वरूपातिरोधानेन मीलितासम्भवाद्भेदातिरोधानेन च सामान्यस्याप्यसम्भवादिति

भावः ॥ सामान्येति। तथा च गुणसाम्याद्विशेषाग्रह इति सामान्यालङ्कारसामान्यलक्षणम्। विशेषाग्रहश्च क्वचिद्भेदे गृह्यमाणे क्वचिच्चागृह्यमाण इत्याद्यप्रकारान्तरगतिरत्र तन्मते स्यादिति भावः। अवान्तरभेदेन वेत्यनन्तरं भाव्यमित्यनुषज्यते ॥ पूर्वस्मिन्निति । मीलितं यदि सादृश्यादित्यादिपूर्वोक्तचन्द्रालोककृन्मत इत्यर्थः। स्वरूपतिरोधानेऽपाङ्गतरल इत्यादिस्वरूपतिरोधानस्थले ॥ अलङ्कारान्तरेणेत्यादि। स्वरूपतो ज्ञायमाने सादृश्याद्भेदाग्रहणं मीलितमित्यङ्गीकारे प्रथमः पक्षः। सादृश्याद्भेदाग्रहणमित्येतावन्मात्रमीलितलक्षणाङ्गीकारेण द्वितीय इति भावः ॥ १४६ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां सामान्यालङ्कारप्रकरणम् ॥ ८० ॥

---

## उन्मीलितविशेषकालङ्कारौ ८१।८२.

(चं०)-भेदवैशिष्ट्ययोः स्फूर्तावुन्मीलितविशेषकौ।
हिमाद्रिं त्वद्यशोमग्नं सुराः शीतेन जानते।
लक्षितान्युदिते चन्द्रे पद्मानि च मुखानि च॥१४७॥

(कुव०)-मीलितन्यायेन भेदानध्यवसाये प्राप्ते कुतोऽपि हेतोर्भेदस्फूर्तौ मीलितप्रतिद्वन्द्व्युन्मीलितम्। यथा सामान्यरीत्या विशेषास्फुरणे प्राप्ते कुतश्चित्कारणाद्विशेषस्फूर्तौ तत्प्रतिद्वन्द्वी विशेषकः। क्रमेणोदाहरणद्वयम्। तद्गुणरीत्यापि भेदानध्यवसायप्राप्तावुन्मीलितं दृश्यते।

(अ०चं०)-भेदेति॥ वैशिष्ट्यं वैजात्यम्। उन्मीलितं विशेषकश्च क्रमेणालङ्कारौ। मग्नं भेदाग्रहात्तदन्तर्गतम्॥ लक्षितानीति। सङ्कुचितत्वादिति भावः। सामान्यरीत्या सामान्यालङ्कारन्यायेन। एवं च "वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि। भृङ्गाः सहेलं यदि नापतिष्यन्कोऽवेदयिष्यन्नवचम्पकानि॥" इत्यपि विशेषकोदाहरणं बोध्यम्। यत्त्वनुमानालङ्कारेणैव गतार्थत्वान्नानयोरलङ्कारान्तरत्वमिति। तदयुक्तम्, उदाहृतस्थले भेदविशेषस्फूर्त्योर्विशेषदर्शनहेतुकप्रत्यक्षरूपत्वात्। अथापि स्वकपोलकल्पितपरिभाषयाऽनुमानालङ्कारतां ब्रूषे तथापि सादृश्यमहिम्ना प्रागनवगतयोर्भेदवैजात्ययोः स्फुरणा-

त्मना विशेषाकारेण मीलितसामान्यप्रतिद्वन्द्विना युक्तमेवालङ्कारान्तरत्वम् । अतद्गुणावज्ञयोरिव विशेषोक्त्यलङ्कारादित्यलं विस्तरेण ॥

( कुव० )-यथा-

नृत्यद्भर्गाट्टहासप्रसरसहचरैस्तावकीनैर्यशोभि-
धावल्यंनीयमाने त्रिजगति परितः श्रीनृसिंहक्षितीन्द्र ।
नेदृग्यद्येष नाभीकमलपरिमलप्रौढिमासादयिष्य-
द्देवानां नाभविष्यत्कथमपि कमलाकामुकस्यावबोधः ॥
काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः ।
वसन्तसमये प्राप्ते काकः काकः पिकः पिकः ॥

इदं विशेषकस्योदाहरणम् । अत्र द्वितीयकाकपिकशब्दौ काकत्वेन ज्ञातः पिकत्वेन ज्ञात इत्यर्थान्तरसंक्रमितवाच्यौ ॥

यथा वा-वाराणसीवासवतां जनानां
साधारणे शङ्करलाञ्छनेऽपि ।
पार्थप्रहारव्रणमुत्तमाङ्गं
प्राचीनमीशं प्रकटीकरोति ॥ १४७ ॥

(अ० चं०)-नृत्यदिति । नृत्यं कुर्वतो भर्गस्य हरस्य योऽट्टहासस्तत्प्रसरस्य समूहस्य विस्तारस्य वा सहचरैः सदृशैरित्यर्थः । ईदृक्कीर्तिवच्छुक्ल एष कमलाकामुको नाभिकमलपरिमलस्य प्रौढिं समृद्धिं यदि नासादयिष्यन्नाधारयिष्यदित्यन्वयः । यत्तु तद्गुणस्यात्र निर्बाधकत्वात्कथं तत्प्रतिद्वन्द्वित्वमुन्मीलितस्येति तदनुक्तोपालम्भरूपत्वादुपेक्ष्यम् । तद्गुणेन भेदानध्यवसायमात्रस्योक्तत्वात् ॥ वाराणसीति । तृतीयलोचनादिचिह्ने साधारणेऽपि सतीत्यन्वयः । पार्थोऽर्जुनस्तेन कृतो यः प्रहारस्तेन व्रणो यत्र तादृशमुत्तमाङ्गं शिरः । पूर्वत्र स्वाभाविकगुणसाम्यमिह त्वागन्तुकगुणसाम्यमिति भेदः ॥ १४७ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायामुन्मीलितविशेषकालङ्कारप्रकरणम् ॥ ८१ ॥ ८२ ॥

---

उत्तरालङ्कारः ८३.

(चं०)-किञ्चिदाकूतसहितं स्याद्गूढोत्तरमुत्तरम्।
यत्रासौ वेतसी पान्थ तत्रेयं सुतरा सरित्॥१४८॥

(कुव०)-सरित्तरणमार्गं पृच्छन्तं प्रति तं कामयमानाया उत्तरमिदम्। वेतसीकुञ्जे स्वाच्छन्द्यमित्याकूतगर्भम्।

यथा वा-ग्रामेऽस्मिन्प्रस्तरप्राये न किञ्चित्पान्थ विद्यते।
पयोधरोन्नतिं दृष्ट्वा वस्तुमिच्छसि चेद्वस॥

आस्तरणादिकमर्थयमानं पान्थं प्रत्युक्तिरियम्। स्तनोन्नतिं दृष्ट्वा रन्तुमिच्छसि चेद्वस। अविदग्धजनप्रायेऽस्मिन्ग्रामे कश्चिदवगमिष्यतीत्येतादृशं प्रतिबन्धकं किञ्चिदपि नास्तीति हृदयम्। इदमुन्नेयप्रश्नोदाहरणम्।

(अ०चं०)-किञ्चिदिति॥ किञ्चिदभिप्रायसहितं गूढमुत्तरमुत्तरं नामालङ्कारः। वेतसी वेतसलता। सुखेन तरितुं योग्या सुतरा॥ ग्राम इति। प्रस्तरप्राये पाषाणबहुले पाषाणतुल्ये च। 'प्रायो बाहुल्यतुल्ययोः' इति कोशात्। किंचिदास्तरणादिकं समागमप्रतिबन्धकं च। पयोधरो मेघः स्तनश्च। कश्चिदवगमिष्यति ज्ञास्यतीत्येतादृशमित्यादिरूपम्। उन्नेयः कल्प्यः प्रश्नो येन तादृशस्योत्तरस्य॥

(कुव०)-निबद्धप्रश्नोत्तरं यथा-

कुशलं तस्या जीवति कुशलं पृच्छामि जीवतीत्युक्तम्।
पुनरपि तदेव कथयसि मृतां नु कथयामि या श्वसिति॥

ईर्ष्यामानानन्तरमनुतप्ताया नायिकायाः सखीमागतां प्रति तस्याः कुशलमिति नायकस्य प्रश्नः। जीवतीति सख्या उत्तरम्। जीवत्याः कुतः कुशलमिति तदभिप्रायः। अन्यत्पृष्टमन्यदुत्तरमिति नायकस्य पुनः कुशलं पृच्छामीति प्रश्नः। पृष्टस्योत्तरमुक्तमित्यभिप्रायेण जीवतीत्युक्तमिति सख्या वचनम्। सखीवचनस्याभिप्रायोद्घाटनार्थं पुनरपि तदेव कथयसीति नायकस्याक्षेपः। मृतां

तु कथयामि या श्वसितीति स्वाभिप्रायोद्घाटनार्थम् । सति मरणे खलु तस्याः कुशलं भवति मदागमनसमयेऽपि श्वासेषु सञ्चरत्सु कथं मृतां कथयेयमित्यभिप्रायः ॥ १४८ ॥

( अ० चं० ) ईर्ष्यामानेति । ईर्ष्याहेतुकमानेत्यर्थः । अनुतप्तायाः पश्चात्तापयुतायाः ॥ १४८ ॥

(चं०)–प्रश्नोत्तरान्तराभिन्नमुत्तरं चित्रमुच्यते ।
के-दारपोषणरताः के खेटाः किं चलं वयः ॥ १४९ ॥

( कुव० )–अत्र केदारपोषणरता इति प्रश्नाभिन्नमुत्तरं के खेटाः किं चलमिति प्रश्नद्वयस्य वय इत्येकमुत्तरम् । उदाहरणान्तराणि विदग्धमुखमण्डने द्रष्टव्यानि ॥ १४९ ॥

( अ०चं० )–प्रश्नोत्तरेति ॥ प्रश्नश्च उत्तरान्तरं च प्रश्नोत्तरान्तरे ताभ्यामभिन्नमुत्तरं चित्रमित्युच्यत इत्यर्थः ॥ के दारेति । दाराणां पोषणे रताः के इति प्रश्नः । केदारस्य क्षेत्रस्य पोषणे रता इति तदेवोत्तरम् । के खेटाः खे आकाशे अटन्तीति प्रश्नस्य यदुत्तरं वयः पक्षिण इति तत्किं चलमिति प्रश्नस्य यदुत्तरान्तरं वयस्तारुण्यादीनि तेनाभिन्नम् ॥ १४९ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायामुत्तरालङ्कारप्रकरणम् ॥ ८३ ॥

---

## सूक्ष्मालङ्कारः ८४.

( चं० )–सूक्ष्मं पराशयाभिज्ञे तरसाकूतचेष्टितम् ।
मयि पश्यति सा केशैः सीमन्तमणिमावृणोत् १५० ॥

( कुव० )–कामुकस्यावलोकनेन सङ्केतकालप्रश्नभावं ज्ञातवत्याश्चेष्टेयम् । अस्तङ्गते सूर्ये सङ्केतकाल इत्याकूतम् ।

यथा वा–सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
आसीन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥ १५० ॥

( अ०चं० )–सूक्ष्ममिति ॥ पराशयाभिज्ञस्येतरस्मिन्परविषये साभिप्रायं चेष्टितं सूक्ष्मालङ्कारः । पराशयाभिज्ञश्चासावितरश्च तस्य साकूतचेष्टि-

तमर्थात्परविषय इति चार्थः ॥ सङ्केतेति । संकेतकाले मनो यस्य तज्जिज्ञासुमिति यावत् । विटं जारं नेत्राभ्यामर्पितमाकूतं यस्मिन् तादृशं लीलासम्बंधि पद्मं नेत्रेत्यादिक्रियाविशेषणं वा ॥ १५० ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां सूक्ष्मालङ्कारप्रकरणम् ॥ ८४ ॥

---

## पिहितालङ्कारः ८५.

( चन्द्रा० )–पिहितं परवृत्तान्तज्ञातुः साकूतचेष्टितम् ।
प्रिये गृहागते प्रातः कांता तल्पमकल्पयत् ॥१५१॥

( कुव० )–रात्रौ सपत्नीगृहे जागरणेन श्रान्तोऽसीति तल्पकल्पनाकूतम् ।

यथा वा–वक्रस्यन्दिस्वेदबिन्दुप्रबन्धै-
र्दृष्ट्वा भिन्नं कुंकुमं कापि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या
स्मित्वा पाणौ खड्गलेखां लिलेख ॥

अत्र स्वेदानुमितपुरुषायितं पुरुषोचितखड्गलेखनेन प्रकाशितम् ॥ १५१ ॥

( अ०चं० ) पिहितमिति ॥ पिहितमिति लक्ष्यनिर्देशः । तल्पं शयनम् ॥ वक्रेति । वक्रे प्रस्रवणशीलानां स्वेदबिन्दूनां प्रबन्धैर्धाराभिः कण्ठे भिन्नं लग्नं कुङ्कुमं दृष्ट्वा काऽपि वयस्या सखी स्मित्वा स्मितं कृत्वा पुंस्त्वं व्यञ्जयन्ती सती तन्व्याः पाणौ खड्गलेखां लिलेखेत्यन्वयः । सूक्ष्मालङ्कारे पराभिप्रायमवगत्य साकूतचेष्टितेनोत्तरसमर्पणम् । पिहितालङ्कारे तु गूढं परवृत्तान्तं ज्ञात्वा साकूतचेष्टया तत्प्रकाशनमिति भेदो बोध्यः ॥ १५१ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां पिहितालङ्कारप्रकरणम् ॥ ८५ ॥

---

## व्याजोक्त्यलङ्कारः ८६.

( चं० )-व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनम् ।
सखि पश्य गृहारामपरागैरस्मि धूसरा ॥ १६२ ॥

( कुव० )-अत्र चौर्यरतकृतसङ्केतभूपृष्ठलुण्ठनलग्नधूलिजालस्य गोपनम् ।

यथा वा-कस्य वा न भवेद्रोषः प्रियायाः सव्रणेऽधरे ।
सभृङ्गं पद्ममाघ्रासीर्वारितापि मयाऽधुना ॥

उपपतिना खण्डिताधराया नायिकायाः सकाशमागच्छन्तं प्रियमपश्यन्त्येव सख्या नायिकां प्रति हितोपदेशव्याजेन तं प्रति नायिकापराधगोपनम् । छेकापह्नुतेरस्याश्चायं विशेषः । तस्यां वचनस्यान्यथानयनेनापह्नवः । अस्यामाकारस्य हेत्वन्तरवर्णनेन गोपनमिति । लक्षणे लक्ष्यनाम्नि चोक्तिग्रहणमाकारस्य गोपनार्थं हेत्वन्तरप्रत्यायकव्यापारमात्रोपलक्षणम् ।

( अ०चं० )-व्याजोक्तिरिति ॥ व्याजोक्तिरिति लक्ष्यनिर्देशः । चौर्यरते कृतं यत्सङ्केतभूतभूमिपृष्ठलुण्ठनमित्यन्वयः । उपपतिना जारेण । तस्यां छेकापह्नुतौ ॥

( कुव० )-ततश्च-

"आयान्तमालोक्य हरिं प्रतोल्या-
मालयाः पुरस्तादनुरागमेका ।
रोमाञ्चकम्पादिभिरुच्यमानं
भामा जुगूह प्रणमन्त्यथैनम् ॥

इत्यत्रापि व्याजोक्तिरेव । तत्र ह्यनुरागकृतस्य रोमाञ्चाद्याकारस्य भक्तिरूपहेत्वन्तरप्रत्यायकेन प्रणामेन गोपनं कृतम् । सूक्ष्मपिहितालङ्कारयोरपि चेष्टितग्रहणमुक्तिसाधारणव्यापारमात्रोपलक्षणम् ।

ततश्च ।

नलिनीदले बलाका मरकतपात्र इव दृश्यते शुक्तिः ।
इति मम सङ्केतभुवि ज्ञात्वा भावं तदाब्रवीदालीम् ॥

इत्यादिष्वपि सूक्ष्मालङ्कारः प्रसरति । अत्र श्लोके तावत्किमावयोः संकेतस्थानं भविष्यतीति प्रश्नाशयं सूचयति कामुके तदभिज्ञया विदग्धया तदा सखीं प्रति साकूतमुक्तमिति सूक्ष्मालङ्कारो भवति । यतोऽत्र बलाकाया मरकतपात्रप्रतिष्ठितशुक्त्युपमया तस्या निश्चलत्वेनाश्वस्तत्वं तेन तस्य प्रदेशस्य निर्जनत्वं तेन तदेवावयोः संकेतस्थानमिति कामुकं प्रति सूचनं लक्ष्यते । न चात्र ध्वनिराशङ्कनीयः । दूरे व्यज्यमानस्यापि संकेतस्थानप्रश्नोत्तरस्य स्वोक्त्यैवाविष्कृतत्वात् । एवं पिहितालङ्कारेऽप्युदाहार्यम् । इदं चान्यदत्रावधेयम् । यत्रासौ वेतसी पान्थेत्यादिषु गूढोत्तरसूक्ष्मपिहितव्याजोक्त्युदाहरणेषु भावो न स्वोक्त्याविष्कृतः किन्तु वस्तुसौन्दर्यबलाद्वक्तृबोद्धव्यविशेषविशेषिताद्गम्यः । तत्रैव वस्तुतो नालङ्कारत्वं, ध्वनिभावास्पदत्वात् । प्राचीनैः स्वोक्ताविष्करणे सत्यलङ्कारास्पदतास्तीत्युदाहृतत्वादस्माभिरप्युदाहृतानि । शक्यं हि "यत्रासौ वेतसी पान्थ तत्रेयं सुतरा सरित् । इति पृच्छन्तमध्वानं कामिन्याह ससूचनम् ॥" इत्याद्यर्थान्तरकल्पनया भावाविष्करणमित्यतः प्राग्येषु लिखितोदाहरणेषु संकेतकालमनसं पुंस्त्वं तन्व्या व्यञ्जयन्ती भामा जुगूहेति भावाविष्करणमस्ति तेष्वेव तत्तदलङ्कार इति ॥ १५२ ॥

( अ०चं० )–आयान्तमिति ॥ प्रतोल्यां रथ्यायाम् । एका काचिद्भामा वनिता सख्याः पुरस्ताद्रोमाञ्चकम्पादिभिरनुभावैर्व्यज्यमानमनुरागमेनं हरिं प्रणमन्ती सती जुगूह गोपितवतीत्यन्वयः । लक्ष्यते व्यज्यते ॥ एवमिति । सूक्ष्मालङ्कारवदुक्तिरूपव्यापारवर्णनमित्यर्थः ॥ उदाहर्तव्यमि-

ति । यथा वक्रस्यन्दीति पद्य एव ' आलीं बालां सस्मितं प्राह मन्दं मुग्धाक्षि त्वामद्य पश्यामि नाथम् ॥" इत्युत्तरार्द्धनिर्माणे नाथमित्युक्त्या प्रकाशनमिति बोध्यम् ॥ वस्तुसौन्दर्येति । वेतसी निकुञ्जरूपवस्तुसौन्दर्येत्यर्थः । ध्वनिभावास्पदत्वाद्ध्वनित्वाश्रयत्वात् । उपसंहरति-अत इति ॥ येष्वित्यस्य भावाविष्करणमस्तीत्यनेनान्वयः ॥ १५२ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां व्याजोक्त्यलङ्कार-प्रकरणम् ॥ ८६ ॥

---

## गूढोक्त्यलङ्कारः ८७.

(चन्द्रा०)-गूढोक्तिरन्योद्देश्यं चेद्यदन्यं प्रति कथ्यते ।
वृषाऽपेहि परक्षेत्रादायाति क्षेत्ररक्षकः ॥ १५३ ॥

( कुव० )-यं प्रति किञ्चिद्वक्तव्यं तत्तटस्थैर्माज्ञायीति तदेव तदन्यं कञ्चित्प्रति श्लेषेणोच्यते चेत्सा गूढोक्तिः । वृषेत्याद्युदाहरणम् । परकलत्रं भुञ्जानं कामुकं प्रति वक्तव्यं परक्षेत्रे सस्यानि भक्षयन्तं कञ्चिदुक्षाणं समीपे चरन्तं निर्दिश्य कथ्यते । नेयमप्रस्तुतप्रशंसा । कार्यकारणादिव्यङ्ग्यत्वाभावात् । नापि श्लेषमात्रमप्रकृतार्थस्य प्रकृतार्थान्वयित्वेनाविवक्षितत्वात् । तस्य केवलमितरवञ्चनार्थं निर्दिष्टतया विच्छित्तिविशेषसद्भावात् ।

यथा वा-

नाथो मे विपणिं गतो न गणयत्येषा सपत्नी च मां
त्यक्त्वा मामिह पुष्पिणीति गुरवः प्राप्ता गृहाभ्यन्तरम् ।
शय्यामात्रसहायिनीं परिजनः श्रान्तो न मां सेवते
स्वामिन्नागमलालनीय रजनीं लक्ष्मीपते रक्ष माम् ॥

अत्र लक्ष्मीपतिनाम्नो जारस्यागमनं प्रार्थयमानायास्तटस्थवञ्चनाय भगवन्तं प्रत्याक्रोशस्य प्रत्यायनम् ॥ १५३ ॥

( अ०चं० )-गूढोक्तिरिति । यदन्योद्देश्यकं वाक्यं तत्तदन्यं प्रति कथ्यते चेद्गूढोक्तिरलङ्कारः । क्षेत्रं सस्यादेः कलत्रं च । अपेहि दूरीभव । अविवक्षितत्वादिति । अयम्भावः-प्रकृताऽप्रकृतश्लेषे ' असावुदयमारूढः '

इत्यादावप्रकृतार्थस्य प्रकृतार्थोपमानतयान्वयः स्वीक्रियते । सर्वथैव प्रकृतासम्बद्धस्याप्रकृतार्थस्य कथनेऽसम्बन्धार्थाभिधायकत्वापत्तेरतः प्रकृतेऽपि श्लेषवादिनाऽप्रकृतस्य प्रकृतसम्बन्धो वाच्यः। स च न सम्भवति विवक्षाविरहादिति कुतस्तर्हि अप्रकृतार्थकथनं तत्राह–तस्येति । अप्रकृतार्थस्येत्यर्थः । ननु तादृशविवक्षाविरहेऽपि नानार्थविन्यासमात्रेणास्तु श्लेष एवेत्याशङ्क्याह–विच्छित्तिविशेषेति । तथा च श्लेषसत्त्वेऽपि विच्छित्तिविशेषाद्गूढोक्तिरवश्यमंगीकार्येत्याशयः । अत एव श्लेषमात्रमिति तन्मात्रनिराकरणमेवोपक्रान्तं न तु श्लेषनि राकरणमिति ॥ नाथ इति । विपणिः पण्यवीथिका । पुष्पिणी रजस्वला । आगमेन वेदेन । लालनीयः स्तुत्य आगमनेन लालनीयश्च । रजनीं व्याप्येति अत्यन्तसंयोगे द्वितीया ॥ १५३ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां गूढोक्त्यलङ्कारप्रकरणम् ॥ ८७ ॥

---

## विवृतोक्त्यलङ्कारः ८८.

(चं०)-विवृतोक्तिः श्लिष्टगुप्तं कविनाऽऽविष्कृतं यदि ।
वृषापेहि परक्षेत्रादिति वक्ति ससूचनम् ॥ १५४ ॥

( कुव० )–श्लिष्टगुप्तं वस्तु यथा कथञ्चित्कविनाऽऽविष्कृतं चेद्विवृतोक्तिः । वृषापेहीत्युदाहरणे पूर्ववद्गुप्तं वस्तु ससूचनमिति कविनाविष्कृतम् ।

यथा वा–

वत्से मा गा विषादं श्वसनमुरुजवं सन्त्यजोर्ध्वप्रवृत्तं
कम्पः को वा गुरुस्ते किमिह बलभिदा जृम्भितेनात्र याहि ।
प्रत्याख्यानं सुराणामिति भयशमनच्छद्मना कारयित्वा
यस्मै लक्ष्मीमदाद्वः स दहतु दुरितं मन्थमुग्धः पयोधिः ॥

इदं परवञ्चनाय गुप्ताविष्करणम् ।

( अ०चं० )–श्लिष्टगुप्तमिति ॥ श्लिष्टेत्युपलक्षणम् । अर्थशक्तिमूलगुप्तस्यापि गच्छाम्यच्युतेत्यादौ सङ्ग्राह्यत्वात्॥ वत्से इति । वत्से लक्ष्मि विषादं खेदं हरं च, उरुजवं महावेगमूर्ध्वं प्रवृत्तं श्वसनं श्वासं पवनं च सन्त्यज कं जलं पातीति तथा वरुणः कम्पश्च गुरुर्महान् बृहस्पतिश्च बलं प्रसिद्धं

तद्भिदा नाशकेन बलाख्यदैत्यनाशकेनेन्द्रेण च अत्र श्रीकृष्णसन्निधौ याहि इति प्रकारेण भयनिवारणव्याजेन सुराणां प्रत्याख्यानं वर्जनं कारयित्वा मन्थो मन्थनं तेन मुग्धः पयोधिः यस्मै लक्ष्मीमदात्स वो दुरितं दहत्वित्यन्वयः ॥ परेति । परवञ्चनाय गुप्तस्य आविष्करणमित्यर्थः ।

( कुव० )--त्रपागुप्ताविष्करणं यथा-

दृष्ट्या केशव गोपरागहृतया किञ्चिन्न दृष्टं मया
तेनेह स्खलिताऽस्मि नाथ पतितां किन्नाम नालम्बसे ।
एकस्त्वं विषमेषु खिन्नमनसां सर्वाबलानां गति-
र्गोप्यैवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरम् ॥

अत्र कृष्णस्य पुरतो विषमे परिस्खलनमभिहितवत्यास्तं कामयमानाया गोपिकाया वचने विषमपथस्खलन-पतनत्राणसम्प्रार्थनरूपेण झटिति प्रतीयमानेनार्थेन गुप्तं विवक्षितमर्थान्तरं सलेशं समूचनमित्यनेनाविष्कृतम् । एवं नैषधादिषु 'चेतो नलं कामयते मदीयम्' इति दमयन्तीवाक्यादिकमप्युदाहरणम् । इदं शब्दशक्तिक्रोडीकृतगुप्ताविष्करणम् ।

अर्थशक्तिमूलगुप्तार्थाविष्करणं यथा-

गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्पद्यते
किं चैवं विजनस्थयोर्हतजनः सम्भावयत्यन्यथा ।
इत्यामन्त्रणभङ्गिसूचितवृथाऽवस्थानखेदालसा-
माश्लिष्यन्पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः ॥

अत्र गच्छाम्यच्युतेत्यामन्त्रणेन त्वया रन्तुं कामेच्छया स्थितं तन्न लब्धमित्यर्थशक्तिलभ्यं वस्तु तृतीयपादेनाविष्कृतम् । सर्वमेतत्कविनिबद्धवक्तृगुप्ताविष्करणोदाहरणम् ।

( अ० चं० )-त्रपेति । लज्जया गुप्तस्येत्यर्थः ॥ दृष्ट्येति । गोपे त्वयि यो राग आसक्तिस्तद्धृतयाऽपहृतया गवां परागैर्धूलिभिर्व्याप्तया च । गोपेति सम्बोधनं वा । किञ्चित्समविषमं युक्तायुक्तं च । इह त्वयि भूमौ च

पत्युर्भावः पतिता तां पतनं प्राप्तां च । विषमेषुः पञ्चशरस्तेन खिन्नमनसां विषमेषु सङ्कटेषु खिन्नमनसां च । अबलानां स्त्रीणां बलरहितानां च सलेशं ससूचनं गोष्ठं गोस्थानम् ॥ चेतोऽनलमिति । लङ्कां न अयते गच्छतीत्यर्थे नलं कामयते इच्छतीत्यर्थो गुप्तस्तदाविष्करणं च ह्रीणा त्वष्टा चेत्यनेनेति बोध्यम् ॥ शब्दशक्तीति । शब्दश्लेषवशेनेत्यर्थः । क्रोडीकृतः सङ्गृहीतः ॥ गच्छामीति । अच्युत मद्विषये अस्खलितेति गुप्तोऽर्थः । चिरकालं त्वद्दर्शनेनापि न तृप्तिरित्यर्थेन दर्शनेन न तृप्तिरपि तु सम्भोगेनेत्यर्थो गुप्तः । विजनस्थयोरेकान्तगतयोः । हतश्चासौजनश्च अन्यथा रत्यर्थं स्थिताविति सम्भावयति । तेन द्वयोरकीर्तिर्जातैव वृथैवात्मानं वञ्चयाव इति गुप्तार्थः । आमन्त्रणस्याच्युतेत्यादेर्भङ्ग्या रचनया सूचितो यो वृथावस्थानखेदस्तेनालसाम् ॥ कविनिबद्धेति । कविनिबद्धेन वक्त्रा गुप्तस्येत्यर्थः ॥

( कुव० )-कविगुप्ताविष्करणं यथा-

सुभ्रु त्वं कुपितेत्यपास्तमशनं त्यक्ताः कथा योषितां
　दूरादेव विवर्जिताः सुरभयः स्रग्गन्धधूपादयः ।
कोपं रागिणि मुञ्च मय्यवनते दृष्टे प्रसीदाधुना
　सत्यं तद्विरहाद्भवन्ति दयिते सर्वा ममान्धा दिशः ॥

अत्र तावदीर्ष्यामानकलुषितदयिताप्रसादनव्यापारविधिः प्रतीयते । दृष्टिरोगार्त्तस्य दृष्टिं प्रत्याक्रोशो विवक्षितार्थः । स च दृष्टे इत्यस्य पदस्य लुप्तोच्चारणेन सम्बुद्धिरूपतामवगमय्याविष्कृतः । कविनिबद्धवक्तृगुप्तं परवञ्चनार्थं कविगुप्तं स्वप्रौढिकथनार्थमिति भेदः ॥ १५४ ॥

( अ० च० )-सुभ्रु त्वमिति ॥ शोभनभ्रूर्दयिता दृष्टिश्च तयोः सम्बोधनम् । कोपो रोषो विकारश्च । रागिण्यनुरागिणीति । अवनते नम्रे इति च मयीत्यस्य विशेषणम् । पक्षे रागिणि रक्तिमशीले नम्रे इति दृक्सम्बोधनम् । एवं दृष्टे इत्यपि ॥ उच्चारणेनेति । स्वरविशेषसहकृतोच्चारणेत्यर्थः ॥ १५४ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां विवृतोक्त्यलङ्कारप्रकरणम् ॥ ८८ ॥

### युक्त्यलङ्कारः ८९.

(चंद्रा०)-युक्तिः पराभिसन्धानं क्रियया मर्मगुप्तये ॥
त्वामालिखन्ती दृष्ट्वान्यं धनुः पौष्पं करेऽलिखत् १५५
(कुवल०)-अत्र पुष्पचापलेखनक्रियया मन्मथो मया लिखित इति भ्रान्त्युत्पादनेन स्वानुरागरूपमर्मगोपनाय परवञ्चनं विवक्षितम् । यथा वा–

दम्पत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वच-
स्तत्प्रातर्गुरुसन्निधौ निगदतस्तस्यातिमात्रं वधूः ।
कर्णालम्बितपद्मरागशकलं विन्यस्य चञ्चूपुटे
व्रीडार्ता विदधाति दाडिमफलव्याजेन वाग्बन्धनम् ॥

अत्र शुकवाङ्मुद्रणया तन्मुखेन स्वकीयरहस्यवचनशुश्रूषुजनवञ्चनं कृतम् । व्याजोक्तावाकारगोपनं युक्तौ तदन्यगोपनमिति भेदः । यद्वा–व्याजोक्तावुक्त्या गोपनमिह तु क्रियया गोपनमिति भेदः । एवं च आयान्तमालोक्य हरिं प्रतोल्यामिति श्लोकेऽपि युक्तिरेव ॥ १५५ ॥

( अ० चं० )–युक्तिरिति ॥ स्वस्य मर्मगोपनाय क्रियया यत्परस्यातिसन्धानं वञ्चनं सा युक्तिरलङ्कारः ॥ त्वामिति । नायकं प्रति दूतीवचनम् । पुष्पस्येदं पौष्पम् ॥ दम्पत्योरिति । तस्य शुकस्य अतिमात्रमत्यर्थं निगदत इति सम्बन्धः । फलशब्दो बीजपरः । गोपनीयविषयभेदस्य विच्छित्तिभेदाप्रयोजकत्वादाह–यद्वेति ॥ नन्वेवं सत्यायांतमालोक्येत्यादौ व्याजोक्तिरेवेति प्रागुक्तं विरुध्येतेत्याशङ्क्याह–एवं चेति ॥ यद्वेति । पक्षाङ्गीकारे चेत्यर्थः । एवं च पूर्वग्रन्थ आद्यपक्षाभिप्रायेणेति भावः ॥ १५५ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां युक्त्यलङ्कारप्रकरणम् ॥ ८९ ॥

---

### लोकोक्त्यलङ्कारः ९०.

(चन्द्रा०)–लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते ।
सहस्व कतिचिन्मासान्मीलयित्वा विलोचने १५६॥

(कुव०)-अत्र लोचने मीलयित्वेति लोकवादानुकृतिः।

यथा वा-मदीये वरदराजस्तवे-

नामैव ते वरद वाञ्छितदातृभावं
व्याख्यात्यतो न वहसे वरदानमुद्राम्।
विश्वप्रसिद्धतरविप्रकुलप्रसूते-
र्यज्ञोपवीतवहनं हि न खल्वपेक्ष्यम्॥

अत्रोत्तरार्द्धे लोकवादानुकारः॥ १५६॥

(अ०चं०)-लोकेति॥ अनुकृतिरनुकरणम्॥ सहस्वेति। अर्थाद्विरहं मासानभिव्याप्येत्यर्थः॥ नामैवेति। हे वरद तव नामैव वाञ्छितदातृत्वमाख्याति कथयत्यतस्त्वं वरदानमुद्राम् इतरदैवतवन्न धारयसि। यतो विश्वप्रसिद्धतरे विप्रकुले प्रसूतिरुत्पत्तिर्यस्य तादृशस्येत्यर्थः॥ १५६॥

इत्यलङ्कारचंद्रिकायां कुवलयानन्दटीकायां लोकोक्त्यलङ्कारप्रकरणम्॥ ९०॥

---

## छेकोक्त्यलङ्कारः ९१.

(चं०)-छेकोक्तिर्यदि लोकोक्तेः स्यादर्थान्तरगर्भिता।
भुजङ्ग एव जानीते भुजङ्गचरणं सखे॥ १५७॥

(कुव०)-केनचित्कस्यचिद्वृत्तान्तं पृष्टस्य समीपस्थमन्यं निर्दिश्यायमेव तस्य वृत्तान्तं जानातीत्युक्तवतोऽयमहेः पादानहिरेव जानातीति लोकवादानुकारः। अत्र स चायं च लोकविदिते धनार्जनादिव्यापारे सहचारिणाविति विदितविषयतया लोकोक्त्यनुवादस्य प्रयोजने स्थिते रहस्येऽप्यनङ्गव्यापारे तस्यायं सहचर इति मर्मोद्घाटनमपि तेन गर्भीकृतम्।

(अ० चं०)-छेकोक्तिरिति लक्ष्यनिर्देशः। अर्थान्तरव्यञ्जकता। समीपस्थं यद्वृत्तान्तः पृष्टस्तत्समीपस्थम्॥ स चायं चेति। पृच्छ्यमानवृत्तान्तस्तत्समीपस्थश्चेत्यर्थः। तेन लोकोक्त्यनुवादेन॥

( कुव० )-यथा वा-

मलयमरुतां व्राता याता विकासितमल्लिका-
परिमलभरो भग्नो ग्रीष्मस्त्वमुत्सहसे यदि ।
घन घटय तं त्वं निःस्नेहं य एव निवर्तने
प्रभवति गवां किं नश्छिन्नं स एव धनञ्जयः ॥

अत्र धनलिप्सया प्रोषिताङ्गनासखीवचने य एव गवां निवर्तने प्रभवति स एव धनञ्जय इत्यान्ध्रजातिप्रसिद्धलौकवादानुकारः । अत्रातिसौन्दर्यशालिनीमिमामपहाय धनलिप्सया प्रस्थितो रसानभिज्ञत्वाद्गोप्राय एव । तस्य निवर्तकस्तु धनस्य जेता धनेनाकृष्टस्य तद्विमुखीकरणेन प्रत्याक्षेपकत्वादित्यर्थान्तरमपि गर्भितम् ॥ १५७ ॥

( अ० चं० )-मलयेति । व्राताः समूहाः । याता गताः । विकासिनां मल्लिकाकुसुमानां परिमलस्य भरो यस्मिन् तादृशो ग्रीष्मो भग्नो नष्टः । हे घन त्वं यद्युत्सहसे उत्साहवान् भवसि तदा तं निःस्नेहं नायकं घटयाऽनया संयोजय । गवां निवर्त्तने परापहृतानां व्यावर्तने य एव प्रभवति स एव धनञ्जयोऽर्जुन इत्यन्वयः । लिप्सया प्रोषितस्य याऽङ्गना तत्सखीवचन इति सम्बन्धः । आन्ध्रस्तैलङ्गः । इमां मत्सखीम् । गोप्रायो गोतुल्यः ॥ १५७ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां छेकोक्त्यलङ्कारप्रकरणम् ॥ ९१ ॥

---

## वक्रोक्त्यलङ्कारः ९२.

( चं० )-वक्रोक्तिः श्लेषकाकुभ्यामपरार्थप्रकल्पनम् ।
मुञ्च मानं दिनं प्राप्तं नेह नन्दी हरान्तिके ॥ १५८ ॥

( कुव० )-अत्र मानं मुञ्च प्रयाता रात्रिरित्याशयेनोक्तायां वाचि नन्दिनं प्राप्तं मा मुञ्चेत्यर्थान्तरं श्लेषेण परिकल्पितम् ।

यथा वा-अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता ।
त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित् ॥

इदमविकृतश्लेषोक्तेरुदाहरणम् ।

विकृतश्लेषवक्रोक्तेर्यथा-

भवित्री रम्भोरु त्रिदशवदनग्लानिरधुना
स ते रामः स्थाता न युधि पुरतो लक्ष्मणसखः।
इयं यास्यत्युच्चैर्विपदमधुना वानरचमू-
र्लघिष्ठेदं षष्ठाक्षरपरविलोपात्पठ पुनः॥

सर्वमिदं शब्दश्लेषमूलाया वक्रोक्तेरुदाहरणम्।

(अ०चं०) वक्रोक्तिरिति॥ काकुर्ध्वनेर्विकारः। अपरार्थस्याभिप्रेतादर्थादर्थान्तरस्य। नन्दी हरस्य गणविशेषः॥ अहो इति। दारुणा क्रूरेत्यभिप्रेतं काष्ठेनेति कल्पनं विकृतत्वं च कस्यचिद्वर्णस्यावापोद्धापाभ्याम्॥ भवित्रीति। सीतां प्रति रावणोक्तिः पादत्रयं चतुर्थस्तं प्रति सीतायाः। ते तव पतिः स रामो युधि संग्रामे पुरतोऽग्रतो न स्थाता स्थास्यतीत्यर्थः। अतिशयेन लघुर्लघिष्ठस्तत्सम्बोधनम्। इदं पादत्रयं षष्ठाक्षरात्पराणां सप्तमानां त्रिनवीति वर्णानां विलोपो यत्र तादृशं पुनः पठेत्यर्थः॥ शब्दश्लेषेति। शब्दस्य परिवृत्त्यसहत्वादिति भावः।

(कुव०)-अर्थश्लेषमूलाया वक्रोक्तेर्यथा-

भिक्षार्थी स क्व यातः सुतनु बलिमखे ताण्डवं क्वाद्य भद्रे
मन्ये वृन्दावनान्ते क्व नु स मृगशिशुर्नैव जाने वराहम्।
बाले कच्चिन्न दृष्टो जरठवृषपतिर्गोप एवास्य वेत्ता
लीलासंलाप इत्थं जलनिधिहिमवत्कन्ययोस्त्रायतां नः॥

काक्वा यथा-

असमालोच्यकोपस्ते नोचितोऽयमितीरितम्।
नैवोचितोऽयमिति तं ताडयामास मालया॥

अत्र नैवोचित इति काकुस्वरविकारेणोचित एवेत्यर्थान्तरकल्पनम्॥ १९८॥

(अ०चं०)-भिक्षेति। जलनिधिश्च हिमवांश्च तत्कन्ययोर्लक्ष्मीपार्वत्योः क्रमेण इत्थं लीलया संलापो मिथोभाषणं नोऽस्मान् त्रायतामित्यन्वयः। इत्थं कीदृक् तदाह-भिक्षार्थीति। हरमभिप्रेत्य लक्ष्म्या वाक्यम्। बलेर्दैत्यस्य मखे यज्ञे इति वामनाभिप्रायं पार्वत्याः। भद्रे शोभने ताण्डवं नृत्यमद्य क्व वर्तत इति लक्ष्मीप्रश्नस्योत्तरं वृन्दावन-

स्यान्ते मध्ये इति श्रीकृष्णाभिप्रायम् । मृगशिशुर्महादेवेन करे धृतः परशुमृगवराभीतिहस्तं प्रसन्नमिति ध्यानश्रवणात् । इदं लक्ष्म्या वाक्यं, नैवेति पार्वत्याः । "मृगः पशौ कुरङ्गे च" इति विश्वः । कच्चिदिति प्रश्ने । जरठो जीर्णः वृषपतिर्वृषश्रेष्ठ इति हरवृषभाभिप्रायं लक्ष्मीवाक्यम् । गोपो गवां पालक इति कृष्णाभिप्रायमुत्तरमिति । अत्र भिक्षादिपदानां परिवृत्तिसहत्वादर्थश्लेषमूलत्वम् ॥ असमालोच्येति । अविचार्येत्यर्थः । मालया पुष्पमालया । "भिक्षुः क्वास्ति बलेर्मखे पशुपतिः क्वास्ते परं गोकुले क्वास्ते पन्नगभूषणः सखि सदा शेते च शेषोपरि । मुग्धे मुञ्च विषादमेनमधुना नाहं प्रकृत्या चलाऽस्मीत्येवं गिरिजासमुद्रतनयाहास्योद्गमः पातु वः ॥" अस्मिन्नपि पद्येऽयमेवालङ्कारः ॥ १५८ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां वक्रोक्त्यलङ्कारप्रकरणम् ॥ ९२ ॥

---

## स्वभावोक्त्यलङ्कारः ९३.

**(चं०)-स्वभावोक्तिःस्वभावस्यजात्यादिस्थस्यवर्णनम्।**
**कुरङ्गैरुत्तरङ्गाक्षैः स्तब्धकर्णैरुदीक्ष्यते ॥१५९॥**

( कुव० )-यथा वा-

तौ सम्मुखप्रचलितौ सविधे गुरूणां
मार्गप्रदानरभसस्खलितावधानौ ।
पार्श्वोपसर्पणमुभावपि भिन्नदिक्कं
कृत्वा मुहुर्मुहुरुपासरतां सलज्जम् ॥ १५९ ॥

( अ०चं० )-स्वभावोक्तिरिति लक्ष्यनिर्देशः । जात्यादिस्थस्य जात्यादिसम्बन्धिनः । आदिपदेन क्रियादिपरिग्रहः । उत्तरङ्गाणि तरङ्गायमाणान्यक्षीणि येषां तैः ॥ ताविति । तौ प्रक्रान्तौ वधूवरौ गुरूणां सविधे अन्योन्याभिमुखं प्रचलितौ परस्परस्य मार्गप्रदाने यो रभसो वेगस्तेन स्खलितं भ्रष्टमवधानं सावधानत्वं ययोस्तादृशावुभावपि भिन्नदिक्कं वामदक्षिणरूपदिक्सम्बन्धि परस्परपार्श्वभागोपसर्पणं मुहुर्मुहुः कृत्वा सलज्जं यथा स्यात्तथोपसरतां उपसर्पणं चक्रतुरित्यर्थः । पूर्वोदाहरणे कुरङ्गजातिस्वभाववर्णनमत्र सलज्जक्रियास्वभाववर्णनमिति भेदः॥१५९॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां स्वभावोक्त्यलङ्कारप्रकरणम् ॥ ९३ ॥

---

## भाविकालङ्कारः ९४.

(चं०)–भाविकं भूतभाव्यार्थसाक्षात्कारस्य वर्णनम् ।
अहं विलोकयेऽद्यापि युद्ध्यन्तेऽत्र सुराऽसुराः ॥ १६० ॥

(कुव०)–स्थानभीषणोद्भावनपरमिदम् ।

यथा वा–अद्यापि तिष्ठति दृशोरिदमुत्तरीयं
धर्त्तुं पुरः स्तनतटात्पतितं प्रवृत्ते ।
वाचं निशम्य नयनं नयनं ममेति
किञ्चित्तदा यदकरोत्स्मितमायताक्षी ॥ १६० ॥

(अ०चं०)–भाविकमिति लक्ष्यनिर्देशः ॥ अद्यापीति । मम नयनं नयनमिति तस्या वाचं निशम्य स्तनतटात्पतितमुत्तरीयं धर्त्तुं पुरः प्रवृत्ते मयि सति तदा आयताक्षी यत्किञ्चित्स्मितमकरोत् । इदमद्यापि मम दृशोः पुरस्तिष्ठतीत्यन्वयः । अत्र नयनपदेन स्ववाचकत्वरूपशक्यसम्बन्धेन नेत्रपदं लक्ष्यते तस्माच्च वस्त्रप्रतीतिः । किंवा स्ववाचकवाच्यत्वरूपशक्यसम्बन्धेन वस्त्रमेव लक्षयतीति वचोबाणैरित्यादिवल्लक्षितलक्षणा वा बोध्या । 'नेत्रं पथि गुणे वस्त्रे' इति विश्वः ॥ १६० ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां भाविकालङ्कारप्रकरणम् ॥ ९४ ॥

---

## उदात्तालङ्कारः ९५.

(चं०)–उदात्तमृद्धेश्चरितं श्लाघ्यं चान्योपलक्षणम् ।
सानौ यस्याभवद्युद्धं तद्धूर्जटिकिरीटिनोः ॥ १६१ ॥

(कुव०)–इदं श्लाघ्यचरितस्यान्याङ्गत्वे उदाहरणम् ।

ऋद्ध्युदाहरणं यथा–
रत्नस्तम्भेषु संक्रान्तैः प्रतिबिम्बशतैर्वृतः ।
ज्ञातो लङ्केश्वरः कृच्छ्रादाञ्जनेयेन तत्त्वतः ॥ १६१ ॥

(अ०चं०)–उदात्तमिति ॥ ऋद्धेः समृद्धेश्चरितमुदात्तमलङ्कारः तथा श्लाघ्यं चरितम् । अन्यस्योपलक्षणमङ्गं चेत्तदपि तथा । सानौ शिखरे ।

यस्य पर्वतस्य । किरीटी अर्जुनः । कृच्छ्रात्कष्टात् । आञ्जनेयेन हनूमता ॥ १६१ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायामुदात्तालङ्कारप्रकरणम् ॥ ९५ ॥

---

## अत्युक्त्यलङ्कारः ९६.

(चं०)–अत्युक्तिरद्भुतातथ्यशौर्यौदार्यादिवर्णनम् ।
त्वयि दातरि राजेन्द्र याचकाः कल्पशाखिनः ॥ १६२ ॥

( कुव० )–इयमौदार्यात्युक्तिः ।

शौर्यात्युक्तिर्यथा–

राजन्सप्ताप्यकूपारास्त्वत्प्रतापाग्निशोषिताः ।
पुनस्त्वद्वैरिवनिताबाष्पपूरेण पूरिताः ॥

सम्पदत्युक्तावुदात्तालङ्कारः । शौर्यात्युक्तावत्युक्त्यलङ्कार इति भेदमाहुः ।

( अ०चं० )-अत्युक्तिरिति लक्ष्यनिर्देशः । अद्भुतं च तदतथ्यं मिथ्यारूपम् । अकूपाराः समुद्राः ॥ आहुरिति । स्वमते तु तथ्यत्वातथ्यत्वाभ्यां भेद इति भावः ।

कुव० )–अनयोरनवद्याङ्गि स्तनयोर्जृम्भमाणयोः ।
अवकाशो न पर्याप्तस्तव बाहुलतान्तरे ॥
अल्पं निर्मितमाकाशमनालोच्येव वेधसा ।
इदमेवंविधं भावि भवत्याः स्तनमण्डलम् ॥

इति सदसदुक्तितारतम्येनातिशयात्युक्त्योर्भेदः ॥ १६२ ॥

( अ० चं० )–अतथ्ये अद्भुतत्वविशेषणस्य कृत्यं दर्शयति--अनयोरित्यादि ॥ एतत्पद्यं योगेऽप्ययोगोऽसम्बन्धातिशयोक्तिरित्यत्र प्रागुदाहृतम् असदुक्तितारतम्येनेति । अनयोरित्यत्रासदुक्तिमात्रम् । अल्पमिति पद्ये त्वत्यन्तासदुक्तिरिति तारतम्येनेत्यर्थः । तथा चाद्भुतेति विशेषणादत्यन्तातथ्यरूपत्वलाभान्नातिशयोक्तावतिव्याप्तिरिति भावः । अत एवानयोरिति पद्यानन्तरं दण्डिनोक्तम्–"इति सम्भाव्यमेवैतद्विशेषाख्यानसंस्कृतम्" इति । एवम् "लोकातीत इवात्यर्थमध्यारोप्य विवक्षितः ।

योऽर्थस्तेनातितुष्यन्ति विदग्धा नेतरे यथा॥” इत्युक्त्वा ‘अल्पं निर्मितम्’ इत्याद्युदाहृत्य इयमत्युक्तिरित्युक्तमिति च॥ १६२॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायामत्युक्त्यलङ्कारप्रकरणम्॥ ९६॥

---

## निरुक्त्यलङ्कारः ९७.

(चं०) निरुक्तिर्योगतो नाम्नामन्यार्थत्वप्रकल्पनम्।
ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवान्॥ १६३॥

(कुव०)–यथा वा–पुरा कवीनां गणनाप्रसङ्गे
कनिष्ठिकाधिष्ठितकालिदासा।
अद्यापि तत्तुल्यकवेरभावा-
दनामिका सार्थवती बभूव॥ १६३॥

(अ० चं०)–निरुक्तिरिति लक्ष्यम्। योगवशान्नाम्नामर्थविशेषाभिधायिनामर्थान्तरोपवर्णनमिति लक्षणम्॥ ईदृशैरिति। चन्द्रं प्रति विरहिण्या उक्तिः। ईदृशैर्जनसन्तापनरूपैः। दोषाया रात्रेः कर्ता दोषाणामाकरश्च॥ पुरेति। कनिष्ठिकाङ्गुलिविशेषः। अधिष्ठितः कालिदासो यस्यां सा अङ्गुलिविशेषरूपा। अर्थवती न विद्यते कविनाम यस्यां सेत्यन्वर्थनामवती॥ १६३॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां निरुक्त्यलङ्कारप्रकरणम्॥ ९७॥

---

## प्रतिषेधालङ्कारः ९८.

(चंद्रा०)–प्रतिषेधः प्रसिद्धस्य निषेधस्यानुकीर्तनम्।
न द्यूतमेतत्कितव क्रीडनं निशितैः शरैः॥१६४॥

(कुव०)–निर्ज्ञातो निषेधः स्वतोऽनुपयुक्तत्वादर्थान्तरं गर्भीकरोति। तेन चारुतान्वितोऽयं प्रतिषेधनामालङ्कारः। उदाहरणे युद्धरङ्गे प्रत्यवतिष्ठमानं शाकुनिकं प्रति विदग्धवचनम्। तत्र युद्धस्याक्षद्यूतत्वाभावो निर्ज्ञात एव कीर्त्य-

मानस्तत्रैव तव प्रागल्भ्यं न युद्धे व्युत्पत्तिग्रहोऽस्तीत्युपहासं गर्भीकरोति तच्च कितवेनाविष्कृतम् ।

यथा वा–न विषेण न शस्त्रेण नाग्निना न च मृत्युना ।
अप्रतीकारपारुष्याः स्त्रीभिरेव स्त्रियः कृताः ॥

अत्र स्त्रीणां विषादिनिमित्तत्वाभावः प्रसिद्ध एव कीर्त्यमानस्तासां विषाद्यतिशायि क्रौर्यमिति । अमुमर्थं व्यक्तीकरोतीति स चाप्रतीकारपारुष्या इति प्रतीकारवद्भ्यो विषादिभ्यस्तासां विशेषं दर्शयता विशेषणेनाविष्कृतः ॥ १६४ ॥

( अ०चं० )–कितवो द्यूतकृत् । 'धूर्तोऽक्षदेवी कितवः' इत्यमरः । ननु प्रसिद्धानुवादस्याचमत्कारित्वात्कथमलङ्कारत्वमत आह–निर्ज्ञात इत्यादि । शकुनैः पाशकैर्दीव्यतीति शाकुनिकः । आविष्कृतमिति ध्वनित्वशंकानिवारणम् । एवमग्रेऽपि ॥ १६४ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां प्रतिषेधालङ्कारप्रकरणम् ॥ ९८ ॥

---

## विध्यलङ्कारः ९९.

( चं० )–सिद्धस्यैव विधानं यत्तदाहुर्विध्यलङ्कृतिम् ।
पञ्चमोदञ्चने काले कोकिलः कोकिलो भवेत् १६५॥

( कुव० )–निर्ज्ञातविधानमनुपयुक्तिबाधितं सदर्थान्तरगर्भीकरणेन चारुतरमिति तं विधिनामानमलङ्कारमाहुः । उदाहरणे कोकिलस्य कोकिलत्वविधानमनुपयुक्तं सदतिमधुरपञ्चमध्वनिशालितया सकलजनहृद्यत्वं गर्भीकरोति । तच्च पञ्चमोदञ्चने इति कालविशेषणेनाविष्कृतम् ।

( अ०चं० )–पञ्चमस्य स्वरविशेषस्योदञ्चनमाविष्करणं यत्र तादृशे काले कोकिलः कोकिलो मधुरध्वनिरभवदित्यर्थः । द्वितीयकोकिलपदस्यानुपयुक्तार्थत्वेनार्थान्तरे संक्रमितत्वात् । सकलजनहृद्यत्वप्रतीतिश्च

प्रयोजनम् । एवं च शालितयेत्यनन्तरं लक्षितयेति शेषो बोध्यः । पूर्ववद् ध्वनित्वाशङ्कानिवारणाय तच्चेत्याद्युक्तम् ॥

( कुवल० )–यथा वा–

हे हस्त दक्षिण मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम् ।
रामस्य गात्रमसि निर्भरगर्भखिन्न-
सीताप्रवासनपटोः करुणा कुतस्ते ॥

अत्र रामस्य स्वहस्तं प्रति रामस्य गात्रमसीति वचनमनुपयुक्तं सद्रामस्येत्यनेन स्वस्यात्यन्तनिष्करुणत्वं गर्भीकरोति । तच्च निर्भरेत्यादिविशेषणेनाविष्कृतम् । यद्यप्यनयोर्विधिनिषेधयोरुदाहरणेषु व्यङ्ग्यान्यर्थान्तरसंक्रमितवाच्यरूपाणि तथापि न ध्वनिभावास्पदानि । स्वोक्त्यैव व्यङ्ग्यविशेषाविष्करणात् । व्यङ्ग्याविष्करणे चालङ्कारत्वमेवेति प्राक्प्रस्तुतांकुरप्रकरणे व्यवस्थितत्वात् । पूर्वं बाधितौ प्रतिषेधौ आक्षेपभेदत्वेनोक्तौ । इह तु प्रसिद्धौ विधिप्रतिषेधौ तत्प्रतिद्वन्द्विनावलङ्कारत्वेन वर्णिताविति भेदः ॥ १६५ ॥

( अ०चं० )–हे हस्तेति । शूद्रतपस्याजनिताधर्मवशादपूर्णायुषि द्विजबालके मृते तद्बधोद्यतस्य रामस्य स्वहस्तं प्रतीयमुक्तिः । जीवातवे जीवनाय । शूद्र एव तपश्चरणान्मुनिरिव मुनिस्तस्मिन्कृपाणं खड्गं विसृज निक्षिप यतो रामस्याकरुणस्य गात्रं शरीरमसि । निर्भरमतिशयेन गर्भखिन्नायाः सीतायाः प्रवासनं निर्वासनं तत्र पटोर्दृढस्येत्यर्थः । अत्र रामपदमकरुणत्वरूपार्थान्तरसङ्क्रमितम् । तदतिशयो व्यङ्ग्यः । स चात्यन्तमित्यनेनोक्तः । ध्वनिभावास्पदानि ध्वनिप्रयोजकानि ॥ व्यवस्थितत्वादिति । "शब्दार्थशक्त्याऽऽक्षिप्तोऽपि व्यङ्ग्योर्थः कविना पुनः । यत्राविष्क्रियते स्वोक्त्या सान्यैवालंकृतिर्ध्वनेः ॥" इति ध्वनिकारवचनेन निर्णीतत्वादित्यर्थः । उक्ताविति "निषेधाभासमाक्षेपं बुधाः केचन मन्वते । आक्षेपोऽन्यो विधौ व्यक्ते निषेधे च तिरोहिते ॥ " इत्येताभ्यां नाहं दूती, गच्छ गच्छसीत्युदाहरणयोः प्रतिपादिताविर्त्यथः । प्रसिद्धत्वाद्बाधितप्रतिद्वन्द्वित्वम् ॥ १६५ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां विध्यलङ्कारप्रकरणम् ॥९९॥

## हेत्वलङ्कारः १००.

(चन्द्रा०)–हेतोर्हेतुमता सार्द्धं वर्णनं हेतुरुच्यते ।
असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवाम् ॥१६६॥

( कुव० )–यथा वा–

एष ते विद्रुमच्छायो मरुमार्ग इवाधरः ।
कस्य नो तनुते तन्वि पिपासाकुलितं मनः ॥

माने नेच्छति वारयत्युपशमे क्ष्मामालिखन्त्यां ह्रियां
स्वातन्त्र्ये परिवृत्य तिष्ठति करौ व्याधूय धैर्ये गते ।
तृष्णे त्वामनुबध्नता फलमियत्प्राप्तं जनेनामुना
यत्स्पृष्टो न पदा स एव चरणौ स्प्रष्टुं न सम्मन्यते ॥

इत्युदाहरणम् ॥ १६६ ॥

( अ०चं० )–हेतोरिति ॥ हेतुमता कार्येण । मानच्छेदः कार्यम् ॥ एष इति । विद्रुमच्छायः प्रवालकान्तिर्विगततरुच्छायश्च । मरुर्निर्जलदेशः ॥ माने इति । माने नेच्छति अनिच्छति सति । एवमुपशमे वारयति सति । ह्रियां लज्जायां क्ष्मां भूमिमालिखन्त्याम् । भूम्युल्लेखनस्य तदनुभावत्वात् । स्वातन्त्र्ये च परिवृत्य पराङ्मुखीभूय तिष्ठति सति धैर्ये करौ व्याधूय मम नानुमतमिति सूचनाय हस्तधूननं कृत्वा गते सति हे तृष्णे त्वामनुसरतामुना जनेनैतावत्फलं प्राप्तं यत्पादेनापि यो न स्पृष्टः स एव चरणौ स्वीयौ स्प्रष्टुं न सम्यक् मन्यते अनुजानातीत्यन्वयः । अत्र तृष्णारूपहेतुतत्कार्ययोः स्पृष्टमभिधानम् ॥ १६६ ॥

(चन्द्रा०)–हेतुहेतुमतोरैक्यं हेतुं केचित्प्रचक्षते ।
लक्ष्मीविलासा विदुषां कटाक्षा वेङ्कटप्रभोः ॥१६७॥

( कुव० )–अत्र च कार्यावश्यंभावतच्छैघ्र्यादिप्रत्यायनार्थः कार्यकारणभेदव्यपदेशः ॥

यथा वा–आयुर्दानमहोत्सवस्य विनतक्षोणीभृतां मूर्तिमान्विश्वासो नयनोत्सवो मृगदृशां कीर्त्तेः प्रकाशः परः ।
आनन्दः कलिताकृतिः सुमनसां वीरश्रियो जीवितं

धर्मस्यैष निकेतनं विजयते वीरः कलिङ्गेश्वरः ॥

अत्र दानमहोत्सवायुष्करत्वादिनाऽध्यवसिते राज्ञि तदायुष्ट्वादिव्यपदेशः ॥ १६७ ॥

( अ०चं० )-भेदान्तरमाह-हेतुहेतुमतोरिति ॥ केचिद्भट्टोद्भटप्रभृतयः । तदुक्तम्-" हेतुमता सह हेतोरभिधानभेदता हेतुः " इति ॥ लक्ष्मीति । कटाक्षा विदुषां लक्ष्मीविलासा इत्यन्वयः । अत्र विलासहेतोर्विलासाभिन्नत्वेनाभिधानम् । एवंविधलक्षणायाः प्रयोजनमाह-अत्रेति ॥ कार्यावश्यंभावश्च तच्छैघ्र्यं चेति विग्रहः । आदिना अपथ्याशनं रोग इत्यादौ कार्यगतोपादेयत्वानुपादेयत्वादिसंग्रहः ॥ आयुरिति । वीरः कलिङ्गेश्वरः कलिङ्गदेशाधिपो विजयत इत्यन्वयः । कीदृशः । दानरूपस्य महोत्सवस्य आयुरिति । कार्याभिन्नत्वेनाभिधानमेवमग्रेऽपि । विशेषेण नतानां क्षोणीभृतां राज्ञां कलिताकृतिर्धृताकारः । वीरश्रियो वीरलक्ष्म्या निकेतनं स्थानम् ॥ १६७ ॥

इति श्रीमत्पदवाक्यप्रमाणाभिज्ञतत्सदुपाख्यभट्टविठ्ठलसूरिवरात्मज-
श्रीरामचन्द्रसूरिसूनुना वैद्यनाथेन कृतायामलङ्कारचन्द्रिका-
ख्यायां कुवलयानन्दटीकायां हेत्वलङ्कारप्रकरणं
सम्पूर्णम् ॥ १०० ॥

(चंद्रा०)-इत्थं शतमलंकारा लक्षयित्वा निदर्शिताः ।
प्राचामाधुनिकानां च मतान्यालोच्य सर्वतः १६८॥

रसवदाद्यलङ्काराः ।

रसभावतदाभासभावशान्तिनिबन्धनाः ।
चत्वारो रसवत्प्रेय ऊर्जस्विच्च समाहितम् ॥१६९॥
भावस्य चोदयः सन्धिः शबलत्वमिति त्रयः ।
अष्टौ प्रमाणालंकाराः प्रत्यक्षप्रमुखाः क्रमात् ।
एवं पञ्चदशान्यानप्यलंकारान्विदुर्बुधाः ॥ १७० ॥

( कु०० )-तत्र विभावानुभावव्यभिचारिभिर्व्यञ्जितो रतिहासशोकादिभिश्चित्तवृत्तिविशेषो रसः । स यत्र परस्याङ्गं

**भवति तत्र रसवदलंकारः । विभावानुभावाभ्यामभिव्यञ्जितो निर्वेदादिस्त्रयस्त्रिंशद्भेदो देवतागुरुशिष्यद्विजपुत्रादावभिव्यज्यमाना रतिश्च भावः । स यत्रापरस्याङ्गं स प्रेयोऽलंकारः ॥**

(अ०चं० )–भावस्येति ॥ निर्वेदादेर्व्यभिचारिभावस्येत्यर्थः । प्रत्यक्षप्रमुखाः प्रत्यक्षाद्याः । ते च प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिसम्भवैतिह्याख्याः ॥ विभावेत्यादि । रत्यादेरालम्बनोद्दीपनरूपाणि नायिकाचन्द्रोदयादीनि कारणानि काव्ये वर्ण्यमानानि विभावयन्तीति व्युत्पत्त्या विभावपदेनाभिधीयन्ते । कार्याणि च कटाक्षरोमाञ्चादीनि । तथाविधान्येवानु पश्चाद्भवन्तीति व्युत्पत्त्यानुभावपदेन एषामेव कार्याणां रत्यादिनोत्पादने कर्तव्ये सहकारिभूतान्युत्कण्ठादीनि च व्यभिचारिपदेन विशेषादभितः समन्ततो ये स्थायिनं चारयन्तीति व्युत्पत्तेः । एवं रतिरासक्त्यनुरागादिपर्यायबोध्यान्तःकरणवृत्तिः । विकृतविदूषिकादिचेष्टादर्शनजन्या । चित्तस्य विकासरूपा वृत्तिर्हासः । इष्टनाशानिष्टलाभादिजन्या चित्तवृत्तिः शोकः प्रसिद्धः । आदिपदेन क्रोधोत्साहभयजुगुप्साविस्मयनिर्वेदाख्यानां षण्णां परिग्रहः । विशेषपदेन च रत्यादेः स्थायित्वप्रयोजकं परिपुष्टत्वं कान्ताविषयत्वमितरानङ्गत्वं च विवक्षितम् । तदुक्तम्–"रत्यादिश्चेन्निरङ्गः स्याद्देवादिविषयोऽथ वा । अन्याङ्गभावभाग्वा स्यान्न तदा स्थायिशब्दभाक्" इति स्थायिन एव चाभिव्यक्तरसत्वम् । यदाहुः–" कारणान्यथ कार्याणि सहकारीणि यानि च । रत्यादेः स्थायिना लोके तानि चेन्नाट्यकाव्ययोः॥विभावा अनुभावास्तत्कथ्यन्ते व्यभिचारिणः । व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः ॥" इति । अभिव्यक्तानां च रत्यादीनां रसरूपाणां क्रमाच्छृङ्गारहास्यकरुणरौद्रवीरभयानकबीभत्साद्भुतशान्तरूपविशेषसंज्ञा बोध्याः । निर्वेदादिरिति । "निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः । आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥ व्रीडा चपलता हर्ष आवेगो जडता तथा । गर्वो विषाद औत्सुक्यं निद्रा विस्मृतिरेव च ॥ स्वप्नो विबोधोऽमर्षश्चाप्यवहित्थमथोग्रता । मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः । त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥" इति भरतेनोक्ताः । लज्जादिना विकारगोपनमवहित्थाख्यो भावः । देवतेत्याद्यपरिपुष्टत्वादेरुपलक्षणम् । रतिरिति चापुष्टहासादेः ॥

(कुव०)-अनौचित्येन प्रवृत्तो रसो भावश्च रसाभासो भावाभासश्चेत्युच्यते स यत्रापरस्याङ्गं तदूर्जस्वित्। भावस्य प्रशाम्यदवस्था भावशान्तिः। तस्याः पराङ्गत्वे समाहितम्। भावस्योद्गमावस्था भावोदयः। द्वयोर्विरुद्धयोर्भावयोः परस्परस्पर्धा भावसन्धिः। बहूनां भावानां पूर्वपूर्वोपमर्देनोत्पत्तिर्भावशबलता। एतेषां निरंतराङ्गत्वे भावोदयादयस्त्रयोऽलङ्काराः॥

(अ०चं०)-अनौचित्येनेति॥एतच्चोदाहरणे दर्शयिष्यामः॥

## रसवदलङ्कारः १०१.

(कुव०)-तत्र रसवदुदाहरणम्-

मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः।
येनैकचुलके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ॥

अत्र मुनिविषयरतिरूपस्य भावस्याद्भुतरसोऽङ्गम्।

यथा वा-अयं स रसनोत्कर्षी पीनस्तनविमर्दनः।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः॥

अत्र करुणस्य शृङ्गारोऽङ्गम्॥

(अ०चं०)-मुनिरिति। कुम्भसम्भवोऽगस्त्यः। एकचुलकेन समुद्रे पीयमाने तदन्तर्गतयोरवताररूपयोर्मत्स्यकूर्मयोर्दर्शनेन गम्योऽद्भुतरसो मुनिप्रभावातिशयपर्यवसन्नतया तद्विषयरतिपोषकत्वात्तदङ्गमिति भावः॥ अयमिति। भूरिश्रवसश्छिन्नं हस्तमालोक्य तद्वधूनामुक्तिः। स पूर्वानुभूतोऽयं करः यः काञ्चीसमाकर्षणशीलः। नीवी वसनग्रन्थिस्तस्या विस्रंसनो मोचक इति स्मर्यमाणया शृङ्गारावस्थया करुणरसपरितोषः॥ इति रसवदलङ्कारः॥

---

## प्रेयो (भावा) ऽलङ्कारः १०२.

(कुव०)-प्रेयोऽलङ्कार एव भावालङ्कार उच्यते।

स यथा-कदा वाराणस्याममरतटिनीरोधसि वसन्वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम्।
अये गौरीनाथ त्रिपुरहर शम्भो त्रिनयन
प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान्॥

अत्र शान्तिरसस्य कदेतिपदसूचितचिन्ताख्यो व्यभिचारिभावोऽङ्गम् ।

यथा वा--

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-
स्तानेतानपि बिभ्रती किमपि न श्रान्तासि तुभ्यं नमः।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुव-
स्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥

अत्र प्रभुविषयरतिभावस्य वसुमतीविषयरतभावोऽङ्गम्।

( अ० चं० )-कदेति ॥ निमिषमिव दिवसान्कदा नेष्यामीत्यन्वयः।कीदृशः। काश्यां गंगातीरे वसन्। अये इत्यादेरिति क्रोशन्नित्यनेनान्वयः ॥ अत्युच्चा इति ॥ स्फारा विस्तीर्णाः । प्रस्तौमि प्रसञ्जयामि । भुवः पृथिव्याः । इमां भुवं बिभ्रद्धारयमाणः ॥ इति प्रेयो ( भावा ) ऽलङ्कारः ॥

---

## उर्जस्विदलङ्कारः १०३.

( कुव० )-ऊर्जस्विद्यथा-

त्वत्प्रत्यर्थिवसुन्धरेशतरुणीः सन्त्रासतः सत्वरं
यान्तीर्वीर विलुण्ठितुं सरभसं याताः किराता वने।
तिष्ठन्ति स्तिमिताः प्ररूढपुलकास्ते विस्मृतोपक्रमा-
स्तासामुत्तरलैः स्तनैरतितरां लोलैरपाङ्गैरपि ॥

अत्र प्रभुविषयरतिभावस्य शृङ्गाररसाभासोऽङ्गम् ।

यथा वा-त्वयि लोचनगोचरं गते
सफलं जन्म नृसिंह भूपते ।
अजनिष्ट ममेति सादरं
युधि विज्ञापयति द्विषां गणः ॥

अत्र कवेः प्रभुविषयस्य रतिभावस्य तद्विषयद्विषद्गणरतिरूपो भावाभासोऽङ्गम् ।

( अ० चं० )-त्वत्प्रत्यर्थीति ॥ हे वीर सन्त्रासतो भयाद्वने सत्वरं गच्छतीस्तव प्रत्यर्थिनः शत्रवो वसुन्धरेशा भूपास्तेषां तरुणीर्विलुण्ठितुं याताः किराता भिल्लाः तासां तरुणीनामुत्तरलैरतिचपलैः स्तनैरतितरामतिशयेन लोलैश्चञ्चलैरपाङ्गैर्नेत्रप्रान्तैश्च तैः स्तिमिताः स्तब्धाः प्रोद्र-

तरोमाञ्चा विस्मृत उपक्रमो लुण्ठनरूपो यैस्तादृशास्तिष्ठन्तीत्यन्वयः । अत्र शृङ्गारस्यानुरक्तराजवनिताविषयत्वादनौचित्येन प्रवृत्तिरित्याभासरूपत्वम् ॥ त्वयीति । अजनिष्ट अभूत् । युधि संग्रामे ॥ तद्विषयेति । प्रभुविषया द्विषद्गणस्य या रतिस्तद्रूप इत्यर्थः । अत्र शत्रुविषयकत्वरूपानौचित्येन प्रवर्तितत्वाद्भावस्याभासत्वम् ॥ इत्यूर्जस्विदलङ्कारः॥

## समाहितालङ्कारः १०४.

( कुव० )–समाहितं यथा–

पश्यामः किमियं प्रपद्यत इति स्थैर्यं मयालम्बितं
किं मां नालपतीत्ययं खलु शठः कोपस्तयाप्याश्रितः ।
इत्यन्योन्यविलक्ष्यदृष्टिचतुरे तस्मिन्नवस्थान्तरे
सव्याजं हसितं मया धृतिहरो मुक्तस्तु बाष्पस्तया ॥

अत्र शृङ्गारस्य कोपशान्तिरङ्गम् ॥

( अ० चं० )–पश्याम इति ॥ नायकस्य स्वमित्रं प्रति नायिकावृत्तान्तोक्तिः । मयि तूष्णींभूते किमियं प्रपद्यते कुरुते तत्पश्याम इत्यभिप्रायेण मया स्थैर्यं मौनरूपमालम्बितमङ्गीकृतम् । पश्याम इति बहुवचनं सखीसमानाभिप्रायम् । एवं तयाप्ययं खलु शठो मां किमिति नालपति भाषत इति कोप आश्रितः । इत्यन्योन्यं परस्परम् । विलक्ष्या लक्ष्यरहिता या दृष्टिस्तत्र चतुरे । सव्याजं निमित्तान्तरव्याजसहितम्॥इति समाहितः॥

## भावोलङ्कारः १०५.

( कुव० )–भावोदयो यथा–

तदद्य विश्रम्य दयालुरेधि मे
दिनं निनीषामि भवद्विलोकिनी ।
अदर्शि पादेन विलिख्य पत्रिणा
तवैव रूपेण समः स मत्प्रियः ॥

अत्र नलं प्रति दमयन्त्या औत्सुक्यरूपभावस्योदयशृङ्गाररसस्याङ्गम् ।

( अ० चं० )–तदिति ॥ एधि भव । निनीषामि नेतुमिच्छामि । यतस्तवैव रूपेण समः स मत्प्रियो नलः पत्रिणा हंसेन पादेन विलिख्य अदर्शि दर्शितः ॥ इति भावोऽलङ्कारः ॥

## भावसन्ध्यलङ्कारः १०६.

( कुव० )-भावसन्धिर्यथा-

एकाभूत्कुसुमायुधेषुधिरिव प्रव्यक्तपुंखावली
जेतुर्मङ्गलपालिकेव पुलकैरन्या कपोलस्थली ।
लोलाक्षीं क्षणमात्रभाविविरहक्लेशासहां पश्यतो
द्रागाकर्णयतश्च वीर भवतः प्रौढाहवाडम्बरम् ॥

अत्र रमणीप्रेमरणौत्सुक्ययोः सन्धिः प्रभुविषयभावस्याङ्गम् ॥

( अ० चं० )-एकेति ॥ हे वीर क्षणमात्रेण युद्धप्रस्थानाद्भावी यो विरहक्लेशस्तदसहिष्णुं लोलाक्षीं दयितां पश्यतस्तथा प्रौढसङ्ग्रामाडम्बरमाकर्णयतश्च भवतः एका कपोलस्थली द्राक् शीघ्रं पुलकैः कुसुमायुधस्य मदनस्येषुधिस्तरुणीव प्रव्यक्ता पुङ्खावली शरपुङ्खपंक्तिर्यत्र तथाभूताऽभूत् । अन्या द्वितीया जेतुर्जयशीलस्य मङ्गलपालिका मङ्गलरूपा पालिका या कुशकाशादिनिर्मिता उभयपार्श्वस्थस्तम्भवृक्षादिषु बद्धा मार्गपालीति प्रसिद्धा तद्वदभूदित्यर्थः । अत्र प्रेमपदोक्ताया रतेरपरिपुष्टत्वाद्भावरूपत्वं बोध्यम् ॥ इति भावसन्ध्यलङ्कारः ॥

---

## भावशबलालङ्कारः १०७.

( कुव० )-भावशबलं यथा-

क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ॥

अत्र वितर्कौत्सुक्यमतिस्मरणशंकादैन्यधृतिचिन्तानां शबलता विप्रलम्भशृङ्गारस्याङ्गम् ॥

( अ०चं० )-क्वाकार्यमिति ॥ शुक्रकन्यां देवयानीं दृष्टवतो राज्ञो ययातेरियमुक्तिः । अकार्यं ब्राह्मणकन्याऽऽसक्तिः । शशलाञ्छनस्य चन्द्रस्य कुलं सोमवंशः । अयं वितर्कः । तदुपमर्देन भूयोऽपीत्यौत्सुक्यम् । एवमग्रेपि । श्रुतं शास्त्रश्रवणमिति मतिः । अहो कोपेपीति स्मरणम् । अपगतकल्मषाः कृते सुकृते धीर्येषां ते किं वदिष्यन्तीति शङ्का । स्वप्ने

ऽपीति दैन्यम्। हे चेतः स्वास्थ्यमुपैहीति धैर्यम्। कः खलु धन्यो युवा तरुणोऽधरं धास्यति चिन्ता। विप्रलम्भो वियोग इति पर्यायौ॥ इति भावशबलम्॥

---

## प्रत्यक्षालङ्कारः १०८.

(कुव०)-प्रमाणालंकारे प्रत्यक्षं यथा-

क्रान्तकान्तवदनप्रतिबिम्बे
भग्नबालसहकारसुगन्धौ॥
स्वादुनि प्रणदितालिनि शीते
निर्विवार मधुनीन्द्रियवर्गः।

यथा वा-किं तावत्सरसि सरोजमेतदारा-
दाहोस्विन्मुखमवभासते युवत्याः।
संशय्य क्षणमिति निश्चिकाय कश्चि-
द्बिब्बोकैर्बकसहवासिनां परोक्षैः॥

पूर्वत्र प्रत्यक्षमात्रमत्र तु विशेषदर्शनजन्यसंशयोत्तर-प्रत्यक्षमिति भेदः॥

(अ०चं०)-क्रान्तेति॥ इन्द्रियाणां वर्गः समूहः। मधुनि मद्ये निर्विवार निर्वृतिं प्राप। कथंभूते। सङ्क्रान्तप्रियमुखप्रतिबिम्बे। भग्नकोमलाम्रपल्लववत्सुगन्धौ स्वादुनि आस्वाद्ये प्रकृष्टनादयुक्तभ्रमरयुते शीतस्पर्शे चेति। अत्रेन्द्रियतृप्त्या तज्जन्यप्रत्यक्षमलङ्कारः॥ किमिति। आराद्दूरे। इति क्षणं सन्दिह्य कश्चिद्बकसहवासिनां कमलानां परोक्षैरदृश्यैर्बिब्बोकैः मानात्प्रियकथालापे 'बिब्बोकोऽनादरक्रिया' इत्युक्तलक्षणैर्हावविशेषैर्मुखमिति निश्चिकाय निर्णीतवान्॥ इति प्रत्यक्षम्॥

---

## अनुमानालङ्कारः १०९.

(कुवल०)-अनुमानं यथा-

यथा रन्ध्रव्योम्नश्चलजलदधूमः स्थगयति
स्फुलिङ्गानां रूपं दधति च यथा कीटमणयः।
यथा विद्युज्ज्वालोल्लसितपरिपिङ्गाश्च ककुभ-
स्तथा मन्ये लग्नः पथिकतरुखण्डे स्मरदवः।

यथा वा–

यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवौ
यत्तत्रैव पतन्ति सन्ततममी मर्मस्पृशो मार्गणाः ।
तच्चक्रीकृतचापपुङ्खितशरप्रेङ्खत्करः क्रोधनो
धावत्यग्रत एव शासनधरः सत्यं तदासां स्मरः ॥

पूर्वं रूपकसङ्कीर्णमिदमतिशयोक्तिसङ्कीर्णमिति भेदः ।

( अ० चं० )–यथेति ॥ यथाशब्दा अनुमानार्थाः । 'यथाशब्दस्तु निर्दिष्टस्तुल्ययोगानुमानयोः ।' इति विश्वकोशात् । तथा च चपलजलरूपो धूमोऽव्योम्न आकाशस्य रन्ध्रमवकाशं यस्मात्स्थगयति तस्माच्च कीटमणयः खद्योताः स्फुलिङ्गानां रूपं दधति धारयन्ति । यस्माच्च विद्युद्रूपाभिर्ज्वालाभिरुल्लसिताः प्रकाशीभूताः परीतः पिङ्गवर्णाश्च ककुभो दिशस्तस्मात्पथिकरूपाणां तरूणां खण्डे समूहे स्मरलक्षणो दवाग्निर्लग्न इति मन्ये इत्यन्वयः ॥ प्रयोगस्तु पथिकतरुखण्डं स्मरदावानलवत् व्योमव्यापिजलदधूमवत्त्वादित्यादिर्बोध्यः॥ यत्रैता इति । लहरीवच्चलाचलाश्चञ्चला दृशो यासां ता एताः कामिन्यो यत्र जने भ्रूलतां व्यापारयन्ति प्रेरयन्ति तत्रैव भ्रूसंज्ञाविषय एव यद्यस्मादमी मर्मस्पर्शिनो बाणाः सन्ततं पतन्ति तत्तस्मान्मण्डलीकृते चापे पुङ्खिता योजितमुखा ये शरास्तेषु प्रेङ्खंश्चपलः करो यस्य तादृशः क्रोधनः स्मरः शासनमाज्ञा तद्धारक आसामग्रतो धावतीति सत्यमित्यन्वयः ॥ अतिशयोक्तीति । मार्गणत्वेन दृशामध्यवसानादिति भावः । प्रयोगस्तु एताश्चक्रीकृतचापं सदा पुरोधावदाज्ञाकरमदनकाः मर्मभेदिबाणपाताश्रयभ्रूसंज्ञास्थानकत्वादिति बोध्यः ॥

( कुव० )–शुद्धानुमानं यथा–

विलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः ।
विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः ॥

यथा वा–

सौमित्रे ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते
चण्डांशोर्निशि का कथा रघुपते चन्द्रोऽयमुन्मीलति ।
वत्सैतद्विदितं कथं नु भवता धत्ते कुरङ्गं यतः
क्वासि प्रेयसि हा कुरङ्गनयने चन्द्रानने जानकि ॥

(अ०चं०)-एवं निलीयमानैरित्यत्रापि । अयं कालः सूर्यास्तमयवान् पक्षिनिलीयमानताद्याश्रयत्वादिति । रविरस्तगमनवान् तादृशकालसम्बन्धत्वादिति वा प्रयोगो ज्ञेयः ॥ सौमित्रे इति । विरहातुरस्य रामस्य लक्ष्मणं प्रत्युक्तिः । अत्राप्ययं चन्द्रः कुरङ्गधारित्वादिति प्रयोगः ॥ इत्यनुमानम् ॥

## उपमानालङ्कारः ११०.

(कुव०) उपमानं यथा-

तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले ।
यस्तन्वि तारकान्यासः शकटाकारमाश्रितः ॥

अत्र मन्मथमिवातिसुन्दरं
दानवारिमिव दिव्यतेजसम् ।
शैलराजमिव धैर्यशालिनं
वेद्मि वेङ्कटपतिं महीपतिम् ॥

पूर्वोदाहरणे उपमानभूतमतिदेशवाक्यं दर्शितम् । अत्रातिदेशवाक्यार्थसादृश्यप्रत्यक्षरूपमुपमानं फलेन सह दर्शितमिति विशेषः ॥

(अ०चं०)-तामिति ॥ तारकाणां न्यासः सन्निवेशः शकटस्याकारं संस्थानमाश्रितस्तां रोहिणीं विजानीहीत्यतिदेशवाक्यार्थज्ञानमिहोपमानम् । इयं शकटाकारनक्षत्रव्यक्तिः रोहिणीपदवाच्येत्युपमितिं प्रतिकरणत्वात् ॥ अत्रेति । अत्र एषु राजसु मध्ये मन्मथमिवातिसुन्दरं महीपतिं वेङ्कटपतिसंज्ञं वेद्मीत्याद्यन्वयः । दानवारिर्विष्णुः शैलराजं हरं धैर्यशालिनं मदनशासकत्वात् ॥ प्रत्यक्षरूपमिति । सादृश्यविशिष्टपिण्डप्रत्यक्षस्यापि फलायोगव्यवच्छिन्नत्वेन कारणत्वादिति भावः । फलेन उपमितिरूपेण ॥ इत्युपमानम् ॥

## शब्दप्रमाणालङ्कारः १११.

(कुव०)-शब्दप्रमाणं यथा-

विवृण्वता दोषमपि च्युतात्मना
त्वयैकमीशं प्रति साधु भाषितम् ।

यमामनन्त्यात्मभुवोऽपि कारणं
कथं स लक्ष्यप्रभवो भविष्यति ॥

अत्र शिवः परमेष्ठिनोऽपि कारणमित्यत्र श्रुतिरूपं शब्दप्रमाणमुपन्यस्तम् । एवं श्रुतिपुराणागमलौकिकवाक्यरूपाण्यपि शब्दप्रमाणान्युदाहरणीयानि ॥

( अ०चं० )-विवृण्वतेति ॥ कुमारसम्भवे बटुवेषं हरं प्रति पार्वत्या इयमुक्तिः । वरदोषं प्रकाशयतापि स्खलितान्तःकरणेन त्वया ईशं महादेवं प्रति एकमलक्ष्यजन्मत्वं साधूक्तम् । यतो यमीशमात्मभुवो ब्रह्मणोऽपि कारणमामनन्ति वेदाः स कथं लक्ष्यः प्रभव उत्पत्तिस्थानं यस्य तादृग्भविष्यतीत्यन्वयः । विवक्षतेति क्वचित्पाठो वक्तुमिच्छतेति तदर्थः ॥ इति शब्दप्रमाणम् ॥

---

## स्मृत्यलङ्कारः ११२.

( कुव० )-तत्र स्मृतिर्यथा-

बलात्कुरुत पापानि सन्तु तान्यकृतानि वः ।
सर्वान्बलकृतानर्थानकृतान्मनुरब्रवीत् ॥

पूर्वं श्रुतिरभिमतार्थे प्रमाणत्वेनोपन्यस्ता । इह तु स्मृतिरनभिमतार्थे तद्दूषणपरेण प्रमाणतया नीतेति भेदः । आचारात्मतुष्ट्योरपि मीमांसकोक्तधर्मप्रमाणयोर्वेदशब्दानुमापकतया शब्दप्रमाण एवान्तर्भावः ।

तत्राचारप्रमाणं यथा-

महाजनाचारपरम्परेदृशी
स्वनाम नामाददते न साधवः ।
अतोऽभिधातुं न तदुत्सहे पुन-
र्जनः किलाचारमुचं विगायति ॥

( अ०चं० )-बलादिति । नास्तिकोक्तिरियम् । हे जनाः पापानि बलात्कुरुत तानि च पापानि वो युष्माकमकृतान्येव भवन्तु । यतो बलात्कारेण कृतान्सर्वानर्थान्मनुरकृतानब्रवीदित्यन्वयः । तद्दूषणपरेण सर्वाभिमतार्थदूषणपरेण । आत्मनस्तुष्टिः प्रीतिर्वैकल्पिके विषये "गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम् ।" इत्यादौ प्रमाणमित्युक्तम् ॥ महाजनेति । दमयन्तीं प्रति नलस्योक्तिः । नाम वितर्के । नाददते न गृह्णन्ति । आचारमुचमाचारत्यागिनं विगायति निन्दति ॥ इति स्मृतिः ॥

---

## आत्मतुष्टिप्रमाणालङ्कारः ११३.

( कुव० )–आत्मतुष्टिप्रमाणं यथा–

असंशयं क्षत्रपरिग्रहक्षमा
यदार्यमस्यामभिलाषि मे मनः।
सतां हि सन्देहपदेषु वस्तुषु
प्रमाणमन्तःकरणस्य वृत्तयः॥

अत्र दुष्यन्तेनात्मतुष्ट्या शकुन्तलापरिग्रहस्य धर्म्यत्वं श्रुत्यनुमतमनुमीयते। एवं श्रुतिलिङ्गादिकमपि मीमांसोक्तं प्रमाणं सम्भवदिहोदाहर्तव्यम्॥

( अ०चं० )–असंशयमिति॥ क्षत्रेण क्षत्रियेण परिग्रहे क्षमा योग्या यत आर्यं श्रेष्ठं मम मनोऽस्यां शकुन्तलायामभिलाषशीलम्। पदेषु विषयेषु॥आ०॥

---

## श्रुत्यलङ्कारः ११४.

( कुव० )–तत्र श्रुतिर्यथा–

त्वं हि नाम्नैव वरदो नाधत्से वरमुद्रिकाम्।
न हि श्रुतिप्रसिद्धार्थे लिङ्गमाद्रियते बुधैः॥

अत्र करिगिरीश्वरस्य वरद इत्यभिधानश्रुत्या सर्वाभिलषितदातृत्वं समर्थितम्।

लिङ्गं यथा–

विदितं वो यथा स्वार्था न मे काश्चित्प्रवृत्तयः।
ननु मूर्तिभिरष्टाभिरित्थंभूतोऽस्मि सूचितः॥

अत्र शिवस्य श्रुतिप्रसिद्धसर्वोपकारकपृथिव्याद्यष्टमूर्तिपरिग्रहलिङ्गेन तत्प्रवृत्तीनां लोकानुग्रहैकप्रयोजनत्वं समर्थितम्। लिङ्गस्य मूलभूतवेदानुमापकतया वैदिकशब्दप्रमाण एवान्तर्भावः। एवं लौकिकलिङ्गानामपि लौकिकशब्दोन्नायकतया लौकिकशब्दप्रमाण एवान्तर्भावः॥

( अ०चं० )–त्वं हीति॥ वरमुद्रिकां वरमुद्रां नाधत्से न धास्यसि। श्रुतिर्वरदसंज्ञारूपा लिङ्गं गमकम्। पक्षे श्रुत्या तृतीयादिरूपया प्रक-

र्षेण शीघ्रं सिद्धेऽर्थे अङ्गाङ्गीभावे सति लिङ्गमर्थप्रकाशनसामर्थ्यरूपमाद्रियते। यथा 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इति श्रुत्या गार्हपत्योपस्थाने विनियुक्तस्य मन्त्रस्येन्द्रप्रकाशनसामर्थ्यरूपेण लिङ्गेनेन्द्रोपस्थाने विनियोगो नाद्रियत इत्यर्थः। करिगिरीश्वरः कालहस्तीश्वरः॥ विदितमिति। इत्थंभूतः परार्थैकवृत्तिकः। अत इत्यस्य चेष्टारूपं प्रमाणान्तरं नाशङ्कनीयमित्यग्रेतनेनान्वयः॥

(कुव०)-अतः।

लोलद्भ्रूलतया विपक्षदिगुपन्यासे विधूतं शिर-
स्तद्वृत्तान्तपरिक्षणे कृतनमस्कारो विलक्ष्यस्थितः।
ईषत्ताम्रकपोलकान्तिनि मुखे दृष्ट्या नतः पादयो-
रुत्सृष्टो गुरुसन्निधावपि विधिर्द्वाभ्यां न कालोचितः॥

इत्यादि चेष्टारुपं प्रमाणान्तरं नाशङ्कनीयम्।

क्वचिच्छब्दप्रमाणकल्पनया चमत्कारो यथा--

किमसुभिर्ग्लपितैर्जड मन्यसे
मयि निमज्जतु भीमसुतामनः।
मम किल श्रुतिमाह तदर्थिकां
नलमुखेन्दुपरां विबुधस्मरः॥

अत्र म्रियमाणानां मनश्चन्द्रं प्रविशतीत्येतदर्थिकायाः श्रुतेर्नलमुखचन्द्रविषयत्वे कल्पिते तथा व्याख्यातृस्मरवाक्यं प्रमाणतयोपन्यस्तम्॥

(अ०चं०)-लोलदिति॥ गुरूणां सन्निधावपि द्वाभ्यां नायकाभ्यां समयोचितो विधिर्नोत्सृष्टः। तथा लोलद्भ्रूलतया नायिकया विपक्षस्य सपत्न्यादेर्दिश उपन्यासे तत्सकाशादागतोऽसीति सूचने कृते नायकेन नेति सूचनाय शिरो विधूतं सञ्चालितम्। ततस्तद्वृत्तान्तपरीक्षणे नायिकया कृते सत्यकृतनमस्कारो विलक्ष्य एव स्थितः। तत ईषत्ताम्रा कपोलकान्तिर्यस्य तादृशे नायिकाया मुखे कोपातिशयाज्जाते सति तत्पादयोर्दृष्टिपातेनैवानतः प्रणत इति॥ किमसुभिरिति। व्याख्यातं प्राक्॥ तथेति। नलमुखचन्द्रविषयत्वव्याख्यातुः स्मरस्येत्यर्थः। तच्चासिद्धत्वात्कल्पितमिति भावः॥ इति शब्दः॥ इति श्रुत्यलङ्कारः॥

## अर्थापत्त्यलङ्कारः ११५.

( कुव० )–अर्थापत्तिर्यथा–

निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि ।
अन्यथा नोपपद्येत पयोधरभरस्थितिः ॥

यथा वा–व्यक्तं बलीयान्यदि हेतुरागमा-
दपूरयत्सा जलधिं न जाह्नवी ।
गङ्गौघनिर्भर्त्सितशम्भुकन्धरा
सुवर्णमर्णः कथमन्यथा स्यात् ॥

( अ० चं० )–निर्णेतुमिति ॥ अस्तीति निर्णेतुं शक्यमित्यन्वयः । व्यक्तमिति हेतुस्तर्कः । यदि व्यक्तं प्रकटं बलीयान् तदा सा जाह्नवी जलधिं नापूरयत् । अन्यथा पूरणे सति अर्णः समुद्रस्य जलं गङ्गौघैर्निर्भर्त्सितं तिरस्कृतं सच्छम्भुकण्ठसमानवर्णं नीलं कथं स्यादित्यन्वयः । इत्यर्थापत्तिः ॥

---

## अनुपलब्ध्यलङ्कारः ११६.

( कुव० )–अनुपलब्धिर्यथा–

स्फुटमसदवलग्नं तन्वि निश्चिन्वते ते
तदनुपलभमानास्तर्कयन्तोऽपि लोकाः ।
कुचगिरिवरयुग्मं यद्विनाधारमास्ते
तदिह मकरकेतोरिन्द्रजालं प्रतीमः ॥

( अ० चं० )–स्फुटमिति ॥ हे तन्वि तर्कयन्तस्तर्कशीला अपि लोकास्तदवलग्नमनुपलभमाना अपश्यन्तस्तवावलग्नं मध्यमसदिति स्फुटमेव निश्चिन्वते । कुलपर्वतश्रेष्ठयुग्मत्वेनाध्यवसितं स्तनद्वन्द्वमाधारं विना यदास्ते तत्त्विह मकरध्वजस्येन्द्रजालं मायाचरितं प्रतीम इत्यन्वयः । इत्यनुपलब्धिः ॥

---

## सम्भवालङ्कारः ११७.

( कुव० )–सम्भवो यथा–

अभूतपूर्वं मम भावि किं वा
सर्वं सहे मे सहजं हि दुःखम् ।

किं तु त्वदग्रे शरणागतानां
पराभवो नाथ न तेऽनुरूपः ॥

यथा वा—

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान्प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥

( अ० चं० )—अभूतेति ॥ ईश्वरं प्रति भक्तस्योक्तिः । पूर्वमभूतमभूतपूर्वं तादृशं मम किं वा भावि न किञ्चित्सर्वं शीतातपादि द्वन्द्वं सहे । हि यतो मम सहजमेव दुःखमस्ति किंतु हे नाथ ते तव शरणागतानां भक्तानां त्वदग्रे पराभवो नानुरूपो नोचित इत्यन्वयः । अथवा तव नानुरूप इत्यन्वयः । अत्र दुःखादेः सम्भवाख्यप्रमाणसिद्धस्य कथनम् । ये नामेति भवभूतेरुक्तिः । नामेति कुत्सने । 'नाम प्राकाश्यसम्भाव्य-क्रोधोपगमकुत्सने ।' इत्यमरः । किमपीति । काकुर्न किमपीत्यर्थः । एष काव्यनिर्माणरूपः । मम कोऽपि समानधर्मा सदृशो य उत्पत्स्यते अस्ति वा तं प्रति यत्नः । हि यस्मान्निरवधिरयं कालः पृथ्वी च विपुलेति क्रमेण योज्यम् । अत्र कालो ह्ययमित्यादिना सोपपत्तिकं सम्भवाख्यप्रमाणमुपदर्शितम् ॥

( कुव० )—यथा वा—

भ्रातः पान्थ कुतो भवान्नगरतो वार्त्ता नवा वर्तते
बाढं ब्रूहि युवा पयोदसमये त्यक्त्वा प्रियां जीवति ।
सत्यं जीवति जीवतीति कथिता वार्त्ता मयापि श्रुता
विस्तीर्णा पृथिवी जनोऽपि विविधः किंकिं न सम्भाव्यते ॥

अत्राद्योदाहरणे अभूतपूर्वं मम भावि किं वेति सम्भवप्रमाणसिद्धार्थो दर्शितः । द्वितीयोदाहरणे सम्भवोपपादकं कालानन्त्यादिकमपि दर्शितम् । तृतीयोदाहरणे तु सम्भवोऽपि कण्ठोक्त इति भेदः ॥

( अ० चं० )-भ्रातरिति ॥ पथिकं प्रति ग्रामस्थस्य प्रश्नः । कुत इत्यनन्तरमागत इति शेषः । नगरादित्युत्तरम् । वार्तेति पुनः पूर्वस्य प्रश्नः । बाढमित्युत्तरमङ्गीकारे । अस्तीत्यर्थः । ब्रूहीति पूर्वस्योक्तिः । युवेत्यादि पान्थवचनम् । सत्यं जीवतीति पुनः पूर्वस्य प्रश्नः । जीवतीत्यादि सर्वं पान्थवचनम् ॥ इति सम्भवः ॥

## ऐतिह्यालङ्कारः ११८.

( कुव० )-ऐतिह्यं यथा-

कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥

अत्र लौकिकी गाथेयमित्यनिर्दिष्टप्रवक्तृकप्रवादपारंपर्यरूपता दर्शिता ॥

( अ०चं० )-अनिर्दिष्टप्रवक्तृकेति । अनिर्दिष्टो विशेषतोऽनुक्तः प्रवक्ता यस्येत्यर्थः।एवं चैतदेवैतिह्यलक्षणमिति दर्शितम्॥इत्यैतिह्यालङ्कारप्रकरणम्॥

( कुव० )-अथैतेषामलङ्काराणां यथासम्भवं क्वचिन्मेलने लौकिकालङ्काराणां मेलन इव चारुत्वातिशयोपलम्भान्नरसिंहन्यायेन पृथगलङ्कारावस्थितौ तन्निर्णयः क्रियते । तत्र तिलतण्डुलन्यायेन स्फुटावगम्यभेदालङ्कारमेलने संसृष्टिः। नीरक्षीरन्यायेनास्फुटभेदालङ्कारमेलने सङ्करः । स चाङ्गाङ्गीभावेन समप्राधान्येन सन्देहेन एकवाचकानुप्रवेशेन चतुर्विधः । एवं नृसिंहाकाराः पञ्चालङ्काराः ॥

( अ०चं० )-यथासम्भवमिति ॥ संसृष्टिसङ्कराभ्यां द्वयोस्तदधिकानां वेति यथासम्भवमित्यर्थः ॥ स्फुटेति । स्फुटमवगम्यमानो भेदो येषामिति विग्रहः । एकस्मिन्वाचकेऽनुप्रवेशोऽवस्थितिः । एतत्सर्वमुदाहरणे व्यक्तीभविष्यति ॥

## अलङ्कारसंसृष्टिः ११९.

( कुव० )-तत्रालङ्कारसंसृष्टिर्यथा-

कुसुमसौरभलोभपरिभ्रम-
द्भ्रमरसम्भ्रमसम्भृतशोभया ।

चलितया विदधे कलमेखला-
कलकलोलकलोलदृशान्यया ॥

अत्र शब्दालङ्कारानुप्रासयमकयोः संसृष्टिः ।

लिम्पतीव तमोऽङ्गानि वर्षन्तीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ।

अत्रोत्प्रेक्षयोरुपमायाश्चेत्यर्थालङ्काराणां संसृष्टिः ।

आनन्दमन्थरपुरन्दरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य ।
पादाम्बुजं भवतु मे विजयाय मञ्जु-
मञ्जीरसिञ्जितमनोहरमम्बिकायाः ॥

अत्र शब्दार्थालङ्कारयोरनुप्रासोपमयोः संसृष्टिः ॥

( अ०चं० )-कुसुमेति ॥ माघे ऋतुवर्णने पद्यमिदम् । अन्यया कयापि वनितया चलितया कलस्वरो मेखलायाः काञ्च्याः कलकलः कोलाहलो विदधे । किम्भूतया । कुसुमसौरभलोभेन परिभ्रमतां भ्रमराणां सम्भ्रमेण त्वराविशेषेण सम्भृता समृद्धा शोभा यस्यास्तया अलका लोला यस्यां तादृशी दृग्यस्यास्तथाभूतयेति ॥ आनन्देति । आनन्देन मन्थरं यथा स्यात्तथा । पुरन्दरेणेन्द्रेण मुक्तमर्पितं माल्यं यत्र तादृशं महिषासुरस्य मौलौ मस्तके हठेन निहितं मञ्जु मनोज्ञं मञ्जीरस्य नूपुरस्य सिञ्जितं रणितं यत्र तादृशमनोरमम्बिकायाः पादाम्बुजमम्बुजसदृशं चरणं नोऽस्माकं विजयाय भवत्वित्यन्वयः । अत्र पादाम्बुजमित्युपमितसमास एव न तु मयूरव्यंसकादिवत्पाद एवाम्बुजमिति । तथा सत्यम्बुजप्राधान्ये मञ्जीरसिञ्जितान्वयायोगादित्युपमैव न रूपकमिति ज्ञेयम् ॥ इति संसृष्टिः ॥

---

## अङ्गाङ्गिभावसङ्करालङ्कारः १२०.

( कुव० )-अङ्गाङ्गिभावसङ्करो यथा-

तलेष्ववेपन्त महीरुहाणां
छायास्तदा मारुतकम्पितानाम् ।
शशाङ्कसिंहेन तमोगजानां
लूनाकृतीनामिव गात्रखण्डाः ॥

अत्र शशाङ्कसिंहेनेति तमोगजानामिति च रूपकम्। यद्यप्यत्र शशाङ्क एव सिंहस्तमांस्येव गजा इति मयूरव्यंसकादिसमाश्रयणेन रूपकवच्छशाङ्कः सिंह इव तमांसि गजा इवेत्युपमितसमासाश्रयणेनोपमापि वक्तुं शक्या। तथापि लूनाकृतीनामिति विशेषणानुगुण्याद्रूपकसिद्धिः। तस्य हि विशेषणस्य प्रधानेन सहान्वयेन भाव्यं न तु गुणेन "गुणानां च परार्थत्वादसम्बन्धः समत्वात्" इति न्यायादुपमितसमासाश्रयणे तस्य पूर्वपदार्थप्रधानत्वाच्छशाङ्कस्य तमसां च प्राधान्यं भवेत्। तत्र न विशेषेण मुख्यार्थान्वयस्वारस्यमस्ति। स्वरूपानशरूपोपचरिताकृतिलवनकर्तृत्वकर्मत्वान्वयसम्भवेऽपि मुख्यार्थान्वयस्वारस्यमेवादरणीयम्॥

( अ०चं० )-तलेष्विति॥ तदा मारुतकम्पितानां महीरुहाणां तलेषु छाया अवेपन्त कम्पमाना आसन्। तत्रोत्प्रेक्षते। शशाङ्करूपेण सिंहेन छिन्नाकृतीनां तमोलक्षणगजानां शरीरखण्डा इवेति। गुणानां चेति तार्तीयाधिकरणसूत्रम्। अस्यार्थः। गुणानां गुणभूतानां पदार्थानां परार्थत्वान्मुख्यप्रधानार्थत्वात्परस्परमसम्बन्धः। कुतः। समत्वादप्रधानत्वसाम्यादिति। यथा भाष्यकारमते पावमानेष्टीनामाधानस्य चाहवनीयाद्यर्थत्वात्परस्परं नाङ्गाङ्गीभावसम्बन्धः। यथा वार्तिककारमतेऽग्निसमिन्धनार्थानां मन्त्रविशेषरूपाणां निविदां सामिधेनीनां चेति संक्षेपः। एतदधिकरणपूर्वपक्षसिद्धान्तौ प्रकृतानुपयोगान्न दर्शितौ॥ स्वरूपनाशेति। स्वरूपनाशरूपमुपचरितं गौणं यदाकृतिलवनमित्यर्थः॥

( कुव० )-स्वरूपनाशक्रोडीकरणप्रवृत्तया लक्षणामूलातिशयोक्त्या रूपकसिद्धिः। तच्च रूपकमुत्प्रेक्षाया अङ्गं तदुत्थापकत्वात्। रूपकाभावे हि छायालूनगात्रखण्डा इवावेपन्तेत्येतावदुक्तावुपमैव सिद्ध्येत्। वेपनादिसाधर्म्यान्न छायानां सद्यःकृतगात्रखण्डतादात्म्यसम्भावनारूपोत्प्रेक्षा। ननु शशाङ्केन लूनाकृतीनां तमसां गात्रखण्डा इवावेपन्तेत्येतावदुक्तावपि सिद्ध्यत्युत्प्रेक्षा। तादा-

त्म्यसम्भावनोपयुक्तलूनाकृतित्वरूपाधिकविशेषणोपादानात् । सत्यम् । तथोक्तावाकृतिलवनादिधर्मरूपकार्यसमारोपनिर्मिता शशाङ्कतमसोर्हन्तृहन्तव्यचेतनवृत्तान्तसमारोपरूपा समासोक्तिरपेक्षणीया । एवमुक्तौ रूपकमिति विशेषः । एवमत्रातिशयोक्तिरूपकोत्प्रेक्षाणामङ्गाङ्गीभावेन सङ्करः ॥

( अ० चं० )–नन्वेवमपि तमोंशेऽस्य विशेषणस्यान्वयात्कथं रूपकसिद्धिरित्याशङ्क्याह–स्वरूपेति ॥ क्रोडीकारेण निगरणेन ॥ लक्षणामूलेति । साध्यवसानलक्षणामूलेत्यर्थः । तथा च तमोंशे उपचारेणान्वय इति भावः । न चैवं सत्युपमाङ्गीकारेऽपि किं बाधकमिति वाच्यम् । तदङ्गीकारे प्रधानान्वयेऽप्युपचाराश्रयणापत्तेः । तदपेक्षयाऽप्रधाने तमोंशे तदङ्गीकारेण रूपकस्यैवौचित्यादिति । न छायानामिति । सिद्ध्येदित्यनुवर्तते । उत्प्रेक्षा न सिद्ध्येदित्यन्वयः । इवशब्दस्य सादृश्ये प्रसिद्धतरत्वेनासति तात्पर्यग्राहके सम्भावनाबोधकत्वासम्भवादिति भावः । रूपकं विनाप्युत्प्रेक्षायां तात्पर्यग्राहकमस्तीति शङ्कते–नन्विति ॥ एवमुक्तौ तमोगजानामित्युक्तौ । तथा च साधकान्तरस्य साधकान्तरादूषकत्वाद्रूपकस्योत्प्रेक्षाङ्गत्वमविकृतमिति भावः॥इत्यङ्गाङ्गिभावसङ्करः॥

## समप्राधान्यसङ्करालङ्कारः १२१.

( कुव० )–समप्राधान्यसङ्करो यथा–

अवतु नः सवितुस्तुरगावली
समतिलङ्घिततुङ्गपयोधरा ।
स्फुरितमध्यगतारुणनायका
मरकतैकलतेव नभःश्रियः ॥

अत्र पयोधरादिशब्दश्लेषमूलातिशयोक्त्याङ्गभूतयोत्थाप्यमानैव सवितृतुरगावल्यां मरकतैकावलीतादात्म्योत्प्रेक्षा । नभोलक्ष्म्यां नायिकाव्यवहारसमारोपरूपसमासोक्तिगर्भैवोत्थाप्यते । पयोधरश्लेषस्योभयोपकारकत्वात् । तत उत्प्रेक्षासमासोक्त्योरेकः कालः परस्परापेक्षया चारुत्वमुन्मेषश्चोभयोस्तुल्य इति विनिगमनाविरहात्समप्राधान्यम् ॥

( अ० चं० )-अवत्विति ॥ सवितुः सूर्यस्य तुरगावली अश्वपंक्तिर्नोऽस्मानवतु । केव । नभःश्रियो गगनलक्ष्म्या मरकतमणिनामेकलता एकावलीवेत्युत्प्रेक्षा । सूर्यतुरङ्गाणां हरितवर्णत्वात् । कथंभूता । सम्यगतिलङ्घितास्तुङ्गा उच्चाः पयोधरा मेघा यया एकावलीपक्षे पयोधरौ स्तनौ । तथा स्फुरितो दीप्तिमान् मध्यगतोऽरुणरूपो नायको नेता सारथिर्यस्याः सा । पक्षे अरुण आरक्तो नायको हारमध्यमणिः । 'नायको नेतरि श्रेष्ठे हारमध्यमणावपि' इति विश्वः । अतिशयोक्त्या मेघानां स्तनत्वेनाध्यवसानरूपया । गर्भैवेत्यनेन तिलतण्डुलन्यायेन स्फुटावगम्यमानभेदायाः संसृष्टेः सकाशाद्वैलक्षण्यं दर्शितम् ॥ एवमत्रेति । एकस्य चमत्कृतिजनने परापेक्षत्वादङ्गाङ्गीभावमाशंक्याह-परस्परेति ॥

( कुव० )-यथा वा-

अङ्गुलीभिरिव केशसञ्चयं
सन्निकृष्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं
चुम्बतीव रजनीमुखं शशी ॥

अत्राङ्गुलीभिरिति वाक्योक्तोपमया तत्प्रायपाठान्मुख्यकुड्मलीकरणलिङ्गानुगुण्याच्चोपमितसमासाश्रयणेन लब्धया सरोजलोचनमिति समासोक्तोपमयाङ्गभूतयोत्थाप्यमानैव शशिकर्तृकनिशामुखचुम्बनोत्प्रेक्षा निशाशशिनोर्दाम्पत्यव्यवहारसमारोपरूपसमासोक्तिगर्भैवोत्थाप्यते । उपमयोरुभयत्रोत्थापकत्वाविशेषात्समासोक्तिगर्भतां विना चुम्बनोत्प्रेक्षाया निरालम्बनत्वाच्च । ततश्चात्राप्युत्प्रेक्षासमासोक्त्योरेककालयोः समप्राधान्यम् ॥

( अ० चं० )-अंगुलीभिरिति ॥ शशी अंगुलीभिरिव मरीचिभिः केशसञ्चयमिव तिमिरं सन्निगृह्य कुड्मलीकृतसरोजलोचनम् । लोचनमिव सरोजं यत्र तादृशं रजनीमुखं चुम्बतीत्यन्वयः ॥ तत्प्रायेति । उपमाबहुले सन्दर्भे पाठादित्यर्थः ॥ मुख्येति । मुख्यार्थरूपं यत्कुड्मलीकरणरूपं लिङ्गं पुष्पासाधारणधर्मस्तस्यानुकूल्यादित्यर्थः । उत्थापकत्वाविशेषत्वादङ्गत्वाविशेषात् ॥

(कुव०)–यद्यप्यत्रोपमाभ्यां शशिनिशागतावेव धर्मौ समर्थ्येते न तु शशिनायकयोर्निशानायकयोश्च साधारणधर्मौ । साधारणधर्मसमर्पणं चोत्प्रेक्षासमासोक्त्योरपेक्षितम्। उत्प्रेक्षायाः प्रकृताप्रकृतसाधारणगुणक्रियानिमित्तसापेक्षत्वात्समासोक्तेर्विशेषणसाम्यमूलकत्वाच्च। तथापि वाक्योक्तोपमायामिवकारस्य मरीचिभिरिवेत्यन्वयान्तरमभ्युपगम्यान्वयभेदलब्धप्रकृताप्रकृतयोरैकैकविषयस्यार्थद्वयस्य समासोक्तोपमायां सरोजसदृशं लोचनमिति समासान्तरमभ्युपगम्य समासभेदलब्धार्थद्वयस्य चाभेदाध्यवसायेन साधारण्यं सम्पाद्य तयोरुत्प्रेक्षासमासोक्त्योरङ्गता निर्वाह्या ॥

( अ०चं० )–चन्द्रस्य चुम्बनोत्प्रेक्षायां दाम्पत्यव्यवहारसमारोपात्मकसमासोक्तौ चापेक्षितस्य नायकसाधर्म्यस्योक्तोपमाभ्यामसमर्पणात्कथं तयोस्तदङ्गत्वमिति शङ्कते–यद्यपीति ॥ मरीचिभिरिवेति । मरीचिभिरिवांगुलीभिस्तिमिरमिव केशसञ्चयमित्येवंरूपमित्यर्थः । एकैकविषयस्यार्थद्वयस्याभेदाध्यवसानेनेत्यन्वयः । तयोर्वाक्यसमासोक्तोपमयोः ॥

( कुव० )–यद्वा-इह प्रकृतकोटिगतानां मरीचितिमिरसरोजानामप्रकृतकोटिगतानां चांगुलीकेशसञ्चयलोचनानां च तनुदीर्घावरणत्वनीलनीरन्ध्रत्वकान्तिमत्त्वादिना सदृशानां प्रातिस्विकरूपेण भेदवदनुगतसादृश्यप्रयोजकरूपेणाभेदोऽप्यस्ति स चात्र विवक्षित एव भेदाभेदोभयप्रधानोपमेत्यालङ्कारिकसिद्धान्तात् । तत्र च प्रयोजकांशनिष्कर्षन्यायेनाभेदगर्भतांशोपजीवनेन साधारण्यं सम्पाद्य प्रधानभूतोत्प्रेक्षा समासोक्त्यङ्गता निर्वाह्या । न हि प्रकाशशीतापनयनशक्तिमतः सौरतेजसः शीतापनयनशक्तिमात्रेण शीताल्पयोगिता न दृष्टा ॥

( अ०चं० )–आवश्यकाभेदाध्यवसायेनोपपत्तौ कृतमन्वयान्तरसमासान्तरकल्पनागौरवेणेत्याशयेनाह–यद्वेति ॥ तनुदीर्घेत्यादौ पूर्वनिपातनियमा-

नुरोधेन यथासङ्ख्यक्रमपरित्यागः । तथा चांगुलिमरीच्योस्तनुत्वनीरन्ध्रत्वाभ्यां तिमिरकेशसञ्चययोरावरणरूपत्वनीलत्वाभ्यां सरोजलोचनयोर्दीर्घत्वकान्तिमत्त्वाभ्यां च सादृश्यं बोध्यम् । प्रातिस्विकरूपेण अंगुलित्वमरीचित्वादिना ॥ अनुगतेति । अनुगतं यत्सादृश्यप्रयोजकं रूपं तनुत्वादिकं तेनेत्यर्थः । एतच्च सादृश्यमतिरिक्तमित्यभिप्रायेण ॥ सिद्धान्तादिति । तदुक्तं साधर्म्यं त्रिविधं भेदप्रधानमभेदप्रधानं भेदाभेदप्रधानं चेत्युपक्रम्य विद्यानाथेन उपमानन्वयोपमेयोपमास्मरणानां भेदाभेदसाधारणसाधर्म्यमूलत्वमिति । ननु भेदाभेदरूपांशद्वयोपेताया उपमाया भेदांशस्यानुपयोगात्कथं तस्या उत्प्रेक्षाद्युपयोगित्वमित्याशङ्क्य परिहरति–न हीति ॥ प्रकाशश्च शीतापनयनं चेति द्वन्द्वः । शीतालुः शीतार्तः "शीतोष्णतृप्रेभ्यस्तदसहने" इति वालुः ॥

(कुव० )–एवमनभ्युपगमे च

"पाण्ड्योऽयमंसार्पितलम्बहारः
क्लृप्ताङ्गरागो हरिचन्दनेन
आभाति बालातपरक्तसानुः
सनिर्झरोद्गार इवाद्रिराजः ॥"

इत्याद्युपमापि न निर्वहेत । न ह्यत्राद्रिराजपाण्ड्ययोरुपमानोपमेययोरनुगतः साधारणधर्मो निर्दिष्टः । एकत्र बालातपनिर्झरावन्यत्र हरिचन्दनहाराविति धर्मभेदात् । तस्मात्तत्रातपहरिचन्दनयोर्निर्झरहारयोश्च सदृशयोरभेदांशोपजीवनमेव गतिः ॥

( अ०चं० )–उक्तसिद्धान्तस्य निर्युक्तिकत्वेनाश्रद्धेयत्वमाशङ्कमानं प्रत्याह–एवमिति ॥ पाण्ड्योयमिति । पाण्ड्यनामाऽयं नृपः अद्रिराज इवाभाति । कथंभूतः । अंसयोरर्पितो लम्बो हारो येन सः । तथा हरिचन्दनेन रक्तचन्दनेन क्लृप्तः कृत अङ्गरागोनुलेपनं येन तथाभूतः । अद्रिराजः कीदृक् । बालातपेन रक्तानि सानूनि प्रस्थानि यस्य सः । तथा निर्झरस्योद्गारेणोद्गमेन सहितः ॥

(कुव० )–"पिनष्टीव तरङ्गाग्रैः समुद्रः फेनचन्दनम् ।
तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः ॥"

इत्यत्रोत्प्रेक्षयोः कालभेदेऽपि समप्राधान्यम् । अन्योन्यनिरपेक्षवाक्यद्वयोपात्तत्वात् । तदादायेति फेनचन्दनरूपकमात्रोपजीवनेन पूर्वोत्प्रेक्षानपेक्षणात । न चैवं लिम्पतीव तमोङ्गानीतिवदुत्प्रेक्षाद्वयस्य संसृष्टिरेवेयमिति वाच्यम् । लौकिकसिद्धपेषणलेपनपौर्वापर्यच्छायानुकारिणोत्प्रेक्षाद्वयपौर्वापर्येण चारुतातिशयसमुन्मेषतः संसृष्टिवैषम्यात् । तस्माद्दर्शादिवदेकफलसाधनतया समप्रधानमिदमुत्प्रेक्षाद्वयम् । एवं समप्रधानसङ्करोऽपि व्याख्यातः ॥

( अ० चं० )–पिनष्टीति ॥ व्याख्यातं प्राक् ॥ पौर्वापर्येणेति । तथा च चमत्कारप्रयोजकपौर्वापर्यघटकत्वेन भेदानवभासात्संसृष्टिवैलक्षण्यमिति भावः । दर्शादिवद्दर्शपौर्णमासादिवत् । अयं च भिन्नकालीनयोरपि समप्राधान्ये दृष्टान्तः । फलं तत्र स्वर्गः । प्रकृते तु चमत्कृतिविशेषः ॥ इति समप्राधान्यसङ्करालङ्कारः ॥

---

## सन्देहसङ्करालङ्कारः १२२.

( कुव० )–सन्देहसङ्करो यथा–

शशिनमुपगतेयं कौमुदी मेघमुक्तं
जलनिधिमनुरूपं जह्नुकन्यावतीर्णा ।
इति समगुणयोगप्रीतयस्तत्र पौराः
श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥

अत्र इयमिति सर्वनाम्ना यद्यजं वृतवतीन्दुमती विशिष्टरूपेण निर्दिश्यते तदा बिम्बप्रतिबिम्बभावापन्नधर्मविशिष्टयोः सदृशयोरैक्यारोपरूपा निदर्शना । यदि तेन सा स्वरूपेणैव निर्दिश्यते बिम्बभूतो धर्मस्तु पूर्वप्रस्तावात्समगुणयोगप्रीतये इति पौरविशेषणाच्चावगम्यते तत्र प्रस्तुते धर्मिणि तद्वृत्तान्तप्रतिबिम्बभूताप्रस्तुतवृत्तान्तारोपरूपं ललितमित्यनध्यवसायात्सन्देहः ॥

(अ०चं०)-शशिनमिति ॥ अत्र अजस्येन्दुमत्याः स्वयंवरे समगुणयोरजेन्दुमत्योर्योगेन प्रीतिर्येषां ते पौरा नागरिका नृपाणामन्येषां श्रवणयोः कटु पीडाकरमिति पूर्वार्द्धरूपकमेव वाक्यं विवव्रुरुच्चारयामासुरित्यन्वयः। तेन सर्वनाम्ना सा इन्दुमती बिम्बभूतो धर्मः। अजकर्मकं वरणम्। तत्र तस्मिन्पक्षे ॥

(कुव०)-विलीयेन्दुः साक्षादमृतरसवापी यदि भवे-
त्कलङ्कस्तत्रत्यो यदि च विकचेन्दीवरवनम्।
ततः स्नानक्रीडाजनितजडभावैरवयवैः
कदाचिन्मुञ्चेयं मदनशिखिपीडापरिभवम् ॥

अत्र यद्येतावत्साधनं सम्पद्येत तदा तापः शाम्यतीत्यर्थे कविसंरम्भश्चेत्तदैतदुपात्तसिद्ध्यर्थमूह इति सम्भावनालङ्कारः। एतावत्साधनं कदापि न सम्भवत्येवातस्तापशान्तिरपि गगनकुसुमकल्पेत्यर्थे कविसंरम्भश्चेदुपात्तमिथ्यात्वसिद्ध्यर्थं मिथ्यार्थान्तरकल्पनारूपा मिथ्याध्यवसितिरित्युभयतासम्भवात्सन्देहः।

एवम्-

"सिक्तं स्फटिककुम्भान्तःस्थितिश्वेतीकृतैर्जलैः।
मौक्तिकं चेल्लतां सूते तत्पुष्पैस्ते समं यशः॥"

इत्यादिष्वपि सम्भावनामिथ्याध्यवसितिसन्देहसङ्करो द्रष्टव्यः॥

(अ०चं०)-विलीयेति ॥ अग्निसंयोगेन घृतादिवत्केनापि हेतुना विलीनतां प्राप्येत्यर्थः। विकचं विकसितम्। जडभावः शैत्यम्। मदन एव शिखी वह्निः। संरम्भस्तात्पर्यम् ॥ सिक्तमिति। स्फटिककुम्भान्तःस्थित्या श्वेतीकृतैर्जलैः सिक्तं मौक्तिकमित्यन्वयः॥ इति सन्देहसङ्करालङ्कारः॥

---

## एकवचनानुप्रवेशसङ्करालङ्कारः १२३.

(कुव०)-मुखेन गरलं मुञ्चन्मूले वसति चेत्फणी।
फलसन्दोहगुरुणा तरुणा किं प्रयोजनम् ॥

अत्र महोरगवृत्तान्ते वर्ण्यमाने राजद्वाररूढखलवृत्तान्तोऽपि प्रतीयते । तत्र किं वस्तुतस्तथाभूतोरगवृत्तान्त एव प्रस्तुतेऽप्रस्तुतः खलवृत्तान्तस्ततः प्रतीयत इति समासोक्तिः । यद्वा प्रस्तुतखलवृत्तान्तप्रत्यायनायाप्रस्तुतमहोरगवृत्तान्तकीर्तनमप्रस्तुतप्रशंसा । यद्वा वर्ण्यमानमहोरगवृत्तान्तकीर्तनेन समीपस्थितखलमर्मोद्घाटनं क्रियत इति उभयस्यापि प्रस्तुतत्वात्प्रस्तुतांकुर इति सन्देहः ॥

( अ०चं )-मुखेनेति ॥ सन्दोहः समूहः ॥ लक्षयित्वेति । स्फुटमेकत्र विषये शब्दार्थालङ्कृतिद्वयमिति सूत्रेणेत्यर्थः ॥

( कुव० )-एकवाचकानुप्रवेशसङ्करस्तु शब्दार्थालङ्कारयोरेवेति लक्षयित्वा काव्यप्रकाशकार उदाजहार-

स्पष्टोच्छ्वसत्किरणकेसरसूर्यबिम्ब-
विस्तीर्णकर्णिकमथो दिवसारविन्दम् ।
श्लिष्टाष्टदिग्दलकलापमुखावतार-
बद्धान्धकारमधुपावलि सञ्चुकोच ॥

अत्रैकपदानुप्रविष्टौ रूपकानुप्रासौ यत्रैकस्मिञ्छ्लोके पदभेदेन शब्दार्थालङ्कारयोः स्थितिस्तत्र तयोः संसृष्टिरिह तु सङ्कर इति । अलङ्कारसर्वस्वकारस्तु एकस्मिन्वाचकेऽनुप्रवेशो वाच्ययोरेवालङ्कारयोः स्वारसिको वाच्यप्रतियोगिकत्वाद्वाचकस्येति मत्वाऽर्थालङ्कारयोरप्येकवाचकानुप्रवेशसङ्करमुदाजहार ।

( अ०चं० )-स्पष्टेति ॥ अथो अनन्तरं दिवसरूपमरविन्दं कमलं सञ्चुकोच सङ्कोचमगमत् । कीदृक् । स्पष्टमुच्छ्वसन्त उल्लसन्तः किरणा एव केसराणि यस्यास्तथाभूता सूर्यबिम्बरूपा विस्तीर्णा कर्णिका वराटो यस्य तत् । श्लिष्टाः प्रकाशाभावेन परस्परं मिलिता अष्ट दश एव दलानां कलापस्तन्मुखेनावतारो यस्यास्तादृशी बद्धा अन्धकाररूपा मधुपावलिर्येन तथाभूतमित्यर्थः ॥ पदभेदेनेति । "सो णत्थि एत्थ गामे जो एअं महमहंतलाअण्णम् । तरुणाणंहिअअलूडिं परिसप्पन्ति

णिवारेइ" "स नास्त्यत्र ग्रामे य एतां स्फुरल्लावण्याम् । तरुणानां हृदयलुण्ठनं परिसर्पन्तीं निवारयति" इति संस्कृतम् । अत्र पूर्वार्द्धेऽनुप्रासस्तृतीयपादे रूपकमिति तयोः संसृष्टिः । वाच्यप्रतियोगिकत्वादिति । वाच्यं प्रतियोगि प्रतिसम्बन्धि यस्य तद्वाच्यप्रतियोगिकं तत्त्वादित्यर्थः । एवं च काव्यावाच्यस्यानुप्रासादेः शब्दालङ्कारस्य तदनुप्रवेशो न वाचकानुप्रवेश इति वक्तुं युक्तमिति भावः ॥

( कुव० )-सत्पुष्करद्योतितरङ्गशोभि-
न्यमन्दमारब्धमृदङ्गवाद्ये ।
उद्यानवापीपयसीव यस्या-
मेणीदृशो नाट्यगृहे रमन्ते ॥

अत्र नाट्यगृहवापीपयसोः सत्पुष्करेत्यादिविशेषणं शब्दसाम्यं श्लेषः, अमन्दमारब्धेत्यादिविशेषणेऽर्थसाम्यमुपमा, तदुभयमेकस्मिन्निवशब्देऽनुप्रविष्टमिति तदपि न मन्यामहे । सत्पुष्करेत्यादिविशेषणेऽपि श्लेषभित्तिकाभेदाध्यवसायरूपातिशयोक्तिलभ्यस्य धर्मसाम्यस्यैव तत्रेवशब्दप्रतिपाद्यतया शब्दसाम्यस्य तदप्रतिपाद्यत्वात् ।

( अ० चं० )-सत्पुष्करेति ॥ यस्यां नगर्यामेणीदृश उद्यानसम्बन्धिवापीपयसीव नाट्यगृहे रमन्ते क्रीडन्ति । कीदृशैः समीचीनैः पुष्करैः कमलैः द्योतिनो ये तरङ्गास्तच्छोभावति । गृहपक्षे समीचीनैः पुष्करैर्वाद्यभाण्डमुखैर्द्योतितो यो रङ्गो नृत्यभूमिस्तच्छोभिनीत्यर्थः । 'पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले । व्योम्नि खड्गफले पद्मे ' इत्यमरः । श्लेषभित्तिकेति । श्लेषो भित्तिरिव भित्तिर्मूलं यस्येत्यर्थः ॥

( कुव० )-श्लेषभित्तिकाभेदाध्यवसायेन धर्मसाम्यतानङ्गीकारे । "अहो रागवती सन्ध्या जहाति स्वयमम्बरम्" इत्यादिश्लिष्टविशेषणसमासोक्त्युदाहरणे विशेषणसाम्याभावेन समासोक्त्यभावप्रसङ्गात् । शब्दसाम्यस्येवशब्दप्रतिपाद्यत्वेऽपि तस्योपमावाचकत्वस्यैव प्राप्त्या श्लेषवाचकत्वाभावाच्च । शब्दतोऽर्थतो वा कविसम्मतसाम्यप्रतिपादने सर्वविधेप्युपमालङ्कारस्वीकारात् ।

अन्यथा—"यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा ।
तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥"

इत्यत्राप्युपमा न स्यात् । न ह्यत्रान्वर्थनामरूपशब्दसाम्यं विना किञ्चिदर्थसाम्यं कविविवक्षितमस्ति । तस्माद्यत्रैकस्मिन्नर्थे प्रतिपाद्यमाने अलंकारद्वयप्रतीतिस्तत्र तयोरलंकारयोरेकवाचकानुप्रवेशः ॥

(अ० चं० )—रागवतीति । रागोऽनुरागो रक्तिमा च । अम्बरमाकाशं वस्त्रं च । नन्वत्र विशेषणसाम्यायाभेदाध्यवसायापेक्षणेऽपि सत्पुष्करेत्यादौ शब्दसाम्यमात्रेणाप्युपमोपपत्तेर्न तदपेक्षेत्यत आह—शब्देति ॥ शब्दतोऽर्थतो वेति । शब्दप्रयुक्तमर्थप्रयुक्तं वा यत्कविसम्मतं साम्यं तत्प्रतिपादन इत्यर्थः । सर्वविधे सर्वप्रकारे ॥ यथेति । "चदि आह्लादने" इति धात्वनुसाराच्चन्द्रपदमन्वर्थम् । अन्वर्थोऽन्वर्थनामा । तस्मान्मतद्वयस्याप्ययुक्तत्वात् ॥

( कुव० )—विधुकरपरिरम्भादात्तनिष्पन्दपूर्णैः
शशिदृषदुपक्लृप्तैरालवालैस्तरूणाम् ।
विफलितजलसेकप्रक्रियागौरवेण
व्यरचि स हृतचित्तस्तत्र भैमीवनेन ॥

अत्र हि प्रतिपाद्यमानोऽर्थः समृद्धिमद्वस्तुवर्णनमुदात्तमिति लक्षणानुसारादुदात्तालंकाररूपः असम्बन्धे सम्बन्धकथनमतिशयोक्तिरिति लक्षणादतिशयोक्तिश्च । न च सर्वत्रोदात्तस्यासम्बन्धे सम्बन्धवाचनरूपत्वं निर्णीतमिति न विविक्तालंकारद्वयलक्षणसमावेशोऽस्तीति वाच्यम् । दिव्यलोकगतसम्पत्समृद्धिवर्णनादिष्वतिशयास्पृष्टस्योदात्तस्य शौर्यौदार्यदारिद्र्यादिविषयवर्णनेषूदात्तास्पृष्टाया अतिशयोक्तेश्च परस्परविविक्ततया विश्रान्तेः । तयोश्चेहार्थवशसम्पन्नसमावेशयोर्नाङ्गाङ्गिभावः । एकेनापरस्यानुत्थापनात्स्वातन्त्र्यपारतन्त्र्यविशेषादर्शनाच्च । नापि समप्राधान्यम् । यैः शब्दैरिह सम्बन्धि वस्तु प्रतिपाद्यते

तैरेव तस्यैव वस्तुनो सम्बन्धे सम्बन्धरूपस्य प्रतिपाद्यमानतया भिन्नप्रतिपादकशब्दव्यवस्थितार्थभेदाभावात्। नापि सन्देहसंकरः। एकालंकारकोट्यां तदन्यालंकारकोटिप्रतिक्षेपाभावात। तस्मादिहोदात्तातिशयोक्त्योरेकवाचकानुप्रवेशलक्षणः संकरः॥

(अ०चं०)-विधुकरेति॥ स हंसस्तत्र भैमीवनेन दमयन्त्या उद्यानेन हृतचित्तो व्यरचि कृतः। कथंभूतेन। चन्द्रकिरणाश्लेषोदात्तैरङ्गीकृतैर्निष्यन्दैः पूर्णैश्चन्द्रकान्तघटितैस्तरूणामालवालैर्विफलीकृतजलसेकप्रकाररूपगौरवेणेत्यर्थः॥ शब्दव्यवस्थितेति। शब्दप्रयुक्तेत्यर्थः। तथा च समप्राधान्यमर्थभेदविषयमिति भावः। प्रतिक्षिप्यते निवार्यते कोट्यन्तरमनेनेति प्रतिक्षेपो विरोधः॥ इत्येकवाचकानुप्रवेशसङ्करालङ्कारः॥

---

## सङ्करसङ्करालङ्कारः १२४.

(कुव०)-क्वचित्संकराणामपि संकरो दृश्यते। यथा—

मुक्ताः केलिविसूत्रहारगलिताः सम्मार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालांघ्रिलाक्षारुणाः।
दूराद्दाडिमबीजशंकितधियः कर्षन्ति केलीशुका-
स्तद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम्॥

अत्र तावद्विदुषां सम्पत्समृद्धिवर्णनमुदात्तालंकारस्तन्मूलको बालांघ्रिलाक्षारुणा इत्यत्र तद्गुणालंकारस्तत्रैव वक्ष्यमाणभ्रान्त्युपपादकः पदार्थहेतुककाव्यलिङ्गालंकारश्चेति तयोरेकवाचकानुप्रवेशसंकरस्तन्मूलः शंकितधिय इत्यत्र भ्रान्तिमदलंकारस्ताभ्यां चोदात्तालंकारश्चारुतां नीत इति तयोश्च तस्य चाङ्गाङ्गिभावसंकरः॥

(अ० चं०)-मुक्ता इति॥ विदुषां मंदिरेषु भवनेषु केलौ सुरतक्रीडायां विच्छिन्नसूत्राद्धाराद्गलिताः सम्मार्जनीभिरपसारिताः प्रातःकालेऽङ्गणसीमान्ते मन्द चलन्तीनां बालानां चरणलाक्षारसेनारुणा मुक्ताः दूराद्दाडिमबीजशङ्कितधियः क्रीडाशुका यत्कर्षन्त्याकर्षन्ति तद्भोजनृपतेस्त्या-

गस्य दानस्य लीलायितमित्यन्वयः। तत्रैव बालांघ्रिलाक्षारुणा इत्यत्रैव ॥ वक्ष्यमाणेति । शङ्कितधिय इति वक्ष्यमाणेत्यर्थः । तयोस्तद्गुणकाव्यलिङ्गयोः । तन्मूलः सङ्करमूलः । ताभ्यां सङ्करभ्रान्तिमद्भ्याम् । तयोः सङ्करभ्रान्तिमतोः । तस्य उदात्तस्य । हेतुमतः कार्यस्य अभेदकथनं तत्त्यागलीलायितस्य कार्यमिति वक्तव्ये तदेव त्यागलीलायितमित्यभेदकथनम् ॥

( कुव० )–एवं विद्वद्गेहवैभवस्य हेतुमतो राज्ञो वितरणविलासस्य हेतोश्चाभेदकथनं हेत्वलङ्कारः । स च राज्ञो वितरणविलासस्य निरतिशयोत्कर्षाभिव्यक्तिपर्यवसायी । एतावन्मात्रे कविसंरम्भश्चेदुक्तरूपोदात्तालङ्कारपरिष्कृते हेत्वलङ्कारे विश्रान्तिः । कीदृशी सम्पदिति प्रश्नोत्तरतया निरतिशयैश्वर्यवितरणरूपा प्रस्तुतकार्यमुखेन तदीयसम्पदुत्कर्षप्रशंसने कविसंरम्भश्चेत्कार्यनिबन्धनाप्रस्तुतप्रशंसालङ्कारे विश्रांतिः । कार्यस्यापि वर्णनीयत्वेन प्रस्तुतत्वाभिप्राये तु प्रस्तुताङ्कुरे विश्रान्तिः । अत्र विशेषानध्यवसायात्सन्देहसङ्करः । किञ्च । विद्वद्गृहवैभववर्णनस्यासम्बन्धे सम्बन्धकथनरूपतयाऽतिशयोक्तेरुदात्तालङ्कारेण सहैकवाचकानुप्रवेशसङ्करः । निरतिशयवितरणोत्कर्षपर्यवसायिनो हेत्वलङ्कारस्यात्यद्भुतातथ्यौदार्यवर्णनात्मिकयात्युक्त्या सहैकवाचकानुप्रवेशसङ्करः । तन्मूलकस्याप्रस्तुतप्रशंसालङ्कारस्य प्रस्तुताङ्कुरस्य वा राजसम्पत्समृद्धिवर्णनात्मकोदात्तालङ्कारेण सहैकवाचकानुप्रवेशसङ्करः। वाचकशब्दस्य प्रातिपादकमात्रपरतया व्यञ्जकसाधारण्यादेषां च त्रयाणामेकवाचकानुप्रवेशसङ्कराणां समप्राधान्यसङ्करः । न ह्येतेषां परस्परमन्यत्राङ्गत्वमस्ति ॥

( अ०चं० )–तदीयेति ॥ राजकीयेत्यर्थः ॥ अतथ्यौदार्येति । असत्यौदार्येत्यर्थः ॥ तन्मूलकस्येति । वितरणोत्कर्षपर्यवसायिहेत्वलङ्कारमूलकस्येत्यर्थः । ननु राजसम्पत्समृद्धेर्व्यञ्जनागम्यत्वेनावाच्यत्वात्कथं

तद्वर्णनात्मकोदात्तालङ्कारेण सहैकवाचकानुप्रवेशकथनमित्याशङ्कायामाह–वाचकशब्दस्येति ॥ त्रयाणामिति । एक उदात्तातिशयोक्त्योरपरो हेत्वत्युक्त्योरन्यो व्यङ्ग्योदात्ताप्रस्तुतप्रशंसाप्रस्तुताङ्करान्यतरयोरित्येवं त्रयाणां परस्परमित्यर्थः ॥

( कुव० )–उदात्तादिमात्रस्यैव हेत्वलंकारादिचारुतापादकत्वेनातिशयोक्तिसङ्करस्याङ्गतयाऽनपेक्षणात् । एवमत्र श्लोके चतुर्णामपि सङ्कराणां यथायोग्यं संकरः । एवमन्यत्राप्युदाहरणान्तराण्यूह्यानि ॥

( अ० चं० )–उदात्तालङ्कारस्य हेत्वलङ्काराङ्गतायाः पूर्वमुक्तत्वादुदात्तातिशयोक्तिसङ्करस्यापि तदङ्गत्वमिति शङ्कां निरस्यति–उदात्तादिमात्रस्यैवेति ॥ उदात्तादीत्यादिपदेन हेत्वलङ्कारपरिग्रहः । हेत्वलङ्कारादीत्यादिपदेन चाप्रस्तुतप्रशंसापरिग्रहः । तत्रापि निरतिशयैश्वर्यवितरणोत्कर्षपर्यवसायिनो हेत्वलङ्कारस्यैव तादृशवितरणरूपकार्यपरिष्कारद्वारा तद्गम्यप्रस्तुतराजसम्पदुत्कर्षप्रशंसारूपायामप्रस्तुतप्रशंसायामङ्गत्वं न त्वद्भुतातथ्यवर्णनारूपात्युक्तिसङ्करस्यापेक्षेति भावः ॥ यथायोग्यमिति । तथाहि उदात्ततद्गुणयोरङ्गाङ्गिभावसङ्करस्य भ्रान्तिमदुदात्तयोरङ्गाङ्गिभावसङ्करस्य चाङ्गाङ्गिभावे च सङ्करः । तथा भ्रान्तिमदुदात्तयोरङ्गाङ्गिभावसङ्करस्योदात्ताङ्गकहेत्वलङ्कारादिसन्देहसङ्करस्य चाङ्गाङ्गिभावेन सङ्कर इति सूक्ष्ममतिभिरूहनीयम् ॥ इति सङ्करसङ्करालङ्कारः ॥ इति रसवदाद्यलङ्काराः ॥

( कुव० )–अमुं कुवलयानन्दमकरोदप्पदीक्षितः ।
नियोगाद्वेङ्कटपतेर्निरुपाधिकृपानिधेः ॥ १७१ ॥
चन्द्रालोको विजयतां शरदागमसम्भवः ।
हृद्यः कुवलयानन्दो यत्प्रसादादभूदयम् ॥ १७२ ॥

इति श्रीमदद्वैतविद्याचार्यश्रीमद्द्विजकुलजलधिकौस्तुभ-
श्रीरङ्गराजाध्वरीन्द्रवरदसूनोरप्पय्यदीक्षितस्य
कृतिः कुवलयानन्दः समाप्तः ॥

( अ०चं० )-स्वकीर्त्यनुवृत्तये ग्रन्थनाम स्वनाम चोपनिबध्नन्ग्रन्थपूर्तिमनुवदति-अमुमिति ॥ स्वग्रन्थस्य प्रामाणिकत्वं सूचयितुमाह-चन्द्रालोक इति ॥ शरदागमसंज्ञकश्चन्द्रालोकमूलभूतो ग्रन्थः । शरत्कालागमनेन चन्द्रस्यालोक इति श्लेषः । तस्माच्च कुवलयानन्दः स्वग्रन्थोऽभूत् । कुवलयस्य कुमुदस्यानन्द इति च श्लेष इति शिवमास्ताम् ॥

विद्वद्वृन्दमहामान्यरामचन्द्रात्मजन्मना ।
विदुषा वैद्यनाथेन कृताऽलङ्कारचन्द्रिका ॥ १ ॥
एनां कुवलयानन्दप्रकाशनविशारदाम् ।
विदाङ्कुर्वन्तु विद्वांसः काव्यतत्त्वविदां वराः ॥ २ ॥
असौ कुवलयानन्दश्चन्द्रालोकोत्थितोऽपि सन् ।
प्रतिष्ठां लभते नैव विनाऽलङ्कारचन्द्रिकाम् ॥ ३ ॥

इति श्रीमत्पदवाक्यप्रमाणज्ञतत्सद्रामभट्टात्मजवैद्यनाथकृताऽलङ्कार चन्द्रिकाख्या कुवलयानन्दटीका सम्पूर्णा ॥

॥ समाप्तोऽयं ग्रन्थः ॥

---

पुस्तक मिलनेका ठिकाना-

**खेमराज श्रीकृष्णदास,**

"श्रीवेङ्कटेश्वर" स्टीम्-प्रेस-मुंबई.



# क्रय्यपुस्तकें-( अलंकारग्रंथाः )

| | की. |
|---|---|
| बालालंकार-संस्कृत काव्य ... ... ... ... | ॥।) |
| सुभाषितरत्नाकर... ... ... ... ... ... | २) |
| सुभाषितसार-संस्कृत मूल और भाषाटीकासहित ... ... | =) |
| रसतरंगिणी-टिप्पणीसहित ... ... ... ... | ॥) |
| सूक्तावली सुभाषित ... ... ... ... ... | =) |
| वाग्भटालंकार मूल ... ... ... ... ... | ।) |
| वाग्भटालङ्कार-भाषाटीकासहित यह अलङ्कारका बडाही सरल ग्रन्थ है। काव्यसाहित्यकी प्रयोजनीय सभी बातें इसमें आगयी हैं। फर्रुखनगरनिवासी राजवैद्य पण्डित मुरलीधरजी शर्म्माके सान्वय संस्कृत और भाषाटीकासे यह औरभी सरल होगयाहै | १।) |

## काव्यग्रंथाः ।

| | |
|---|---|
| शिशुपालवध-( माघकाव्यम् ) मल्लिनाथकृतटीकासहित ... | २॥) |
| " " तथा पूर्वार्द्ध ९ सर्गमें... ... ... ... | १।) |
| रघुवंशमहाकाव्य कालिदासकृत-मल्लिनाथकृत संजीवनी टीका और टिप्पणी समेत। पक्की जिल्द ... ... ... | १॥) |
| " " तथा सादी जिल्द ... ... ... | १।) |
| रघुवंशमहाकाव्य-सटीक तथा रामकृष्णाख्यविलोम काव्य-सटीक ये दोनोंका एक गुटका है बारीक अक्षर ... ... | ॥=) |
| रघुवंशमहाकाव्य-पं० ज्वालाप्रसादमिश्रकृत सान्वय भाषा-टीका पदयोजना तात्पर्यार्थ और सरलार्थसहित ग्लेज ... | ३॥) |
| तथा रफ कागज ... ... ... ... ... | ३) |
| रघुवंशमहाकाव्य-( पंचसर्ग ५भा.टी.) उपरोक्त अलंकारों समेत | १।) |
| कुमारसंभव-कालिदासकृत और मल्लिनाथकृत संजीवनीटीका-समेत ... ... ... ... ... ... | १।) |
| भामिनीविलास-महावीरप्रसादद्विवेदीकृत भाषाटीकासहित ... | १) |
| " तथा मूल मात्र ... ... ... ... ... | ।) |
| भर्तृहरिशतक-नीति, श्रृंगार, वैराग्य भाषाटीकासमेत ... | १) |
| गीतगोविंद-राधाविनोदसहित भाषाटीका जयदेव गोस्वामिकृत इसमें अति ललित संस्कृतमें रागमय राधाकृष्णका प्रेममय भक्तिकी गानेकी चीजैं विद्यमान हैं १) तथा मूल मात्र ... | =) |

# जाहिरात।

| | की. |
|---|---|
| श्रीरामगीतगोविन्द सटीक। जयदेवस्वामीकृत गीतगोविन्दके अनुसार सीतारामकी भक्तिकी गानेकी अतिललित संस्कृतमें रागमय चीजें वर्णितहैं... ... ... ... ... | ॥) |
| नलोदयकाव्य-सटीक महाराजा नल और दमयंतीका चरित्र-वर्णन... ... ... ... ... ... ... | ॥।) |
| ललितरामचरित्र-काव्य सटीक ... ... ... ... | १) |
| ऋतुसंहारकाव्यम्-कालिदासकृत और चौरकविकृत चौरपंचाशिका काव्य इसमें षड्ऋतु वर्णनादि राजकुमार बाबू देवनंदनसिंहकृत भाषाटीका छंदोवद्ध है... ... ... | ।≡) |
| विद्वन्मोदतरंगिणीकाव्य-चिरञ्जीव भट्टाचार्य्यरचित गद्यपद्य विभूषित ( विद्वानोंको अति उपयोगी ) सर्व शास्त्र और सर्व संप्रदायोंका सिद्धान्त दिखाया है ... ... ... | ।) |
| मेघदूतकाव्य-कालिदासकृत सान्वय मल्लिनाथी टीका आर भाषाटीका समेत इसमें मेघका वर्णन है... ... ... | ॥) |
| मेघदूतकाव्य-सटीक ... ... ... ... ... | ।=) |
| अमरुशतक-( शृंगार और वेदान्तपर काव्य दो टीका सहित ) | ॥=) |
| वसंतशतक-सटीक ( संस्कृत ) वसन्त ऋतुका वर्णन है ... | ≡) |
| राक्षसकाव्य-संस्कृत टीका और भाषाटीका सहित... ... | =) |
| रामकृष्णविलोमकाव्य सटीक ... ... ... ... | ।) |
| गंगालहरी-अन्वयार्थ भाषाटीका ( पं० जगन्नाथ कृत गंगाजीकी स्तुति ) ... ... ... ... ... ... | ≡) |
| कृष्णकर्णामृत काव्य-( भक्तिमय )... ... ... ... | ।) |
| राधाविनोद काव्य-भाषाटीकासहित ... ... ... | =) |
| शृंगारतिलक-भाषाटीकासहित शृंगाररसका अपूर्व वर्णन है ... | ।) |
| शृंगारादि नवरस निरूपण-भाषाटीकासहित शृंगारका अतीव चमत्कारी वर्णन ... ... ... ... ... | ।) |
| रंभाशुकसंवाद-संस्कृत मूल व प्रत्येक श्लोकका कवित्तमें टीका व भाषाटीका सहित अतिमनोरंजक काव्य है ... ... | =) |
| पद्यावली-अनेक महानुभावोंके संगृहीत श्लोक ... ... | ॥) |
| वैराग्यशतक-पं० हरदयालकृत भाषाटीकासहित ... ... | ॥) |
| विद्यासुन्दर-और चौरपंचाशिका भाषाटीकासहित ... ... | ।) |

# जाहिरात ।